Again, in the Rāmāyaṇa, the peacocks are described as spreading their tails in dancing and singing in the rainy season :

क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु सङ्गीतमिव प्रवृत्तम् ॥ —iv, 28, 37

In the Ṛtusaṃhāra also the dance of the peacocks is accompanied by their music and dalliance :

सदा मनोज्ञं स्वनदुत्सवोत्सुकं विकीर्णविस्तीर्णकलापशोभितम् ।
ससंभ्रमालिङ्गनचुम्बनाकुलं प्रवृत्तनृत्यं कुलमद्य बर्हिणाम् ॥ —ii, 16

Both in the Rāmāyaṇa and the Ṛtūsaṃhāra, the rapid flow of the flooded rivers in the rainy seasons is compared to the excited steps of amorous ladies hurrying to meet their lovers :

नद्यः समुद्वाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा ।
दृप्ता नवप्राभृतपूर्णभोगा द्रुतं स्वभर्तारमुपोपयान्ति ॥
—Rām. iv, 28, 39.

निपातयन्त्यः परितस्तटद्रुमान्प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः सुदुष्टा इव जातविभ्रमाः प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥
—Ṛtu. ii, 7

The denuded sand-banks of the rivers in autumn are likened to the naked buttocks of young women full of love's ardour :

दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।
नवसङ्गमसंव्रीडा जघनानीव योषितः ॥
—Rām. iv, 30, 46

नद्यो विशालपुलिनान्तनितम्बबिम्बा मन्दं प्रयान्ति समदाः प्रमदा इवाऽद्य ।
—Ṛtu. iii, 3 cd.

The night is a young lady with the moon as her face and the moonlight as her gossamer robe. The only difference is that the Rāmāyaṇa makes the stars her twinkling eyes (which is more natural and poetic) and the Ṛtusaṃhāra makes them her glittering ornaments :

रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांऽशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥
—Rām. iv, 30, 47

तारागणप्रवरभूषणमुद्वहन्ती मेघावरोधपरिमुक्तशशाङ्कवक्त्रा ।
ज्योत्स्नादुकूलममलं रजनी दधाना वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला ॥

—Rtu. III, 7

The association of the Sarasa birds with the rice-fields at the time of ripening is undoubtedly borrowed in the Ṛtusaṃhāra from the Rāmāyaṇa :

विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः ।
नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥

—Rām. iv, 30, 48

संपन्नशालिनिचयावृतभूतलानि स्वस्थस्थितप्रचुरगोकुलशोभितानि ।
हंसैः ससारसकुलैः प्रतिनादितानि सीमान्तराणि जनयन्ति नृणां प्रमोदम् ॥

—Ṛtu. iii, 16

Besides these, there are several phrases which are taken almost verbatim from the Rāmāyaṇa :

भिन्नाञ्जनचयाकारमम्भोधरमिवोत्थितम् ।

—Rām. iv, 27, 14 ed.

भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञम् ।

--Ṛtu. III, 5*a*

कदम्बार्जुनसर्जैश्च, कदम्बकुटार्जुनकन्दलाढ्या ।

—Rām. iv, 27, 10 c ; 28, 34*a*

कदम्बसर्जार्जुनकेतकीवनम्, मुक्त्वा कदम्बकुटजार्जुनसर्जनीपान् ॥

—Rtu. ii, 17*a* ; iii, 13*c*

Moreover the Rāmāyaṇic descriptions of Arjuna[1] Aśoka[2], Kadamba[3], Karṇikāra[4], Ketaka[5], Kovidāra[6], Nīlotpala[7] and a host of other flowers must have influenced the author of the Ṛtusaṃhāra.

From the comparisons cited above it is quite evident that the account of seasons as given in the Ṛtūsaṃhāra could not have been written without the direct inspiration of the Rāmāyaṇa and that its author must have been a devout reader of the Ādi Kāvya so as to imitate its description and language in his own work[8].

---

1. iv, 28, 9. 2. iv, 1, 29. 3. iv, 28, 26. 4. v, 15. 8. 5. iv. 28, 28. 6. ii. 84, 3. 7. iv, 30, 24. 8 cf. Gurner : JASB. New Series XXVI, PP. 161—174

## Who was Amarakīrtti Sūri ?

This fragmentary commentary of Amarakīrtti Sūri on the Ṛtusaṃhāra is preserved in a single incomplete Ms. in the Government Mss. Library at the Bhandarkar Oriental Research Institute Poona. We have tentatively edited it for the first time. The commentary does not furnish any conclusive data for the life history of its author. In the colophons his name appears as Amarakīrtti Sūri[1] belonging to the Paṭṭa (spiritual lineage) of Guṇākarasūri. The author uses for himself the epithet Sūrīndravarya and Nāgapurīya-tapogaṇabhūpa *i. e.* the head of the Nāgapura Tapogaṇa. The term Tapogaṇa appears to be the same as Tapāgaṇa[2] occuring in the Jain Paṭṭāvalis. In the absence of any Paṭṭāvali af Nāgapura Tapogaṇa we cannot say anything definite about the author's date.

The Jain granthāvali also does not mention his name but there occurs the mention of Guṇākarāsūri as the author of Saṃyaktakaumudī. From a remark of Prof. Winternitz[3] it appears that he presumes the identity of Guṇākarasūri with one Guṇaratna the commentator of Ṣaḍdarśanasamuccaya.

Now this Guṇaratna may again be identical with the Guṇaratnācārya and Guṇaratnasūri mentioned in the Kharataragaccha Paṭṭāvali Nos. 1, 2 which describe Jinacandra Sūri as one who started a branch of the Kharagaccha with Guṇaratna Sūri at its head.[4] Both these Paṭṭāvalis give saṃ 1530 (A.D. 1474) as the year of Jina-candra Sūri's death.

Presuming the identity of Guṇākara Sūri (after whom the Nāgapura Tapogaṇa was called, as stated by Amarakīrtti) with Guṇaratna Sūri of the kharataragaccha Paṭṭāvālis to be correct we get A. D. 1474 as the upper limit for the date

---

1. Cf. pp. 13 ; 27 ; 39 2. Cf. Khataragaccha-Pattavali-sàmgraha by Muni Jinavijaya Calcutta, 1932 pp. 12 ; 33. 3. History of Indian Literature Vol. II, P. 583 Footnote.
4. श्रीगुणरत्नाचार्यादिमहापदकर्तारः, गुणरत्नसूरिप्रमुखानेकपदसंस्थापकाः'

of Amarakīrtti. As regards the lower limit we cannot be very certain. On palaeographical grounds the script of the manuscript appears to belong to the 16th or 17th century A.D. Hence it will not be wide off the mark if we place Amarakīrtti somewhere between the middle of the 16th and beginning of the 17th century[1].

## A Unique Reference.

Besides quoting the names of Amara, Abhidhānacintāmaṇi, Haima and Haimakośa Amarakīrtti mentions the name of Bhojarāja as the patron of the author of Ṛtusaṃhāra *e. g.*

कविर्भोजराजं वदति ( I, 28 ) कविर्भोजराजं ब्रूते ( II, 28 )

This shows that Kālidāsa. the so-called author of the Ṛtusaṃhāra was not the same Kālidāsa as the celebrated author of the Śākuntala and a jewel of Vikramāditya's court, but another Kālidāsa, who flourished in the age of King Bhoja. This statement may not be absolutely reliable as it is not corroborated by any other authority but it provides sufficient ground to assume that the negative side has a tradition as early as the time of Amarakīrtti[2].

1. Cf. Calcutta Oriental Journal Vol. II. pp. 234—36 [2.] This problem is exhaustively discussed in the introduction of my forthcoming work entitled '**Index Verborum to the works of Kalidasa**'

# प्रथमः सर्गः ।

यः समस्तविदुषां शिरोमणिर्येन राजति सभा विपश्चिताम् ।
तं महीश्वरकृताङ्घ्रिवन्दनं नीलकण्ठपितरं नमाम्यहम् ॥

शृङ्गारिकप्रधानं यदृतुसंहारनामकम् ।
काव्यं तत्कालिदासीयं व्याख्यास्येऽहं यथामति ॥
अप्रचारतमोमग्ना कालिदासकृतिर्यतः ।
क्रियतेऽतश्चन्द्रिकेयं विबुधानन्ददायिनी ॥

अथ तत्रभवान्कालिदासनामा कविश्चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थम् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीराद्यन्यतमस्य मङ्गलत्वेन तदन्यतमवस्तुनिर्देशरूपं मङ्गलमाचरन्नादौ ग्रीष्मकालवर्णनरूपां कथां प्रियायै कश्चिन्नायकः प्रस्तौति—

**प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षत[1]वारिसंचयः ।**
**दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः[2] प्रिये ॥ १ ॥**

**प्रचण्डेति** ॥ प्रचण्ड उग्रः सूर्यो दिवाकरो यस्मिन्स तथोक्तः । स्पृहणीयो वाञ्छनीयश्चन्द्रमाश्चन्द्रो यस्मिन्स तथोक्तः । 'हिमांशुश्चन्द्रमाश्चन्द्रः' इत्यमरः । सदा निरन्तरमवगाहेन निमज्जनपूर्वकस्नानैः क्षतः क्षीणो वारिसंचयो जलसमूहो यस्मिन्स तथोक्तः । दिनान्तः संध्याकालो रम्यो रमणीयो यस्मिन्स तथोक्तः । दिवसे सूर्यसत्वादौष्ण्यजनितमाकुलत्वं चन्द्रोदयादिना च शीतलत्वात्तस्य रम्यत्वम् । अभि समन्तादुपशान्तो मन्मथः कंदर्पो यस्मिन्स तथोक्तः । 'वसन्ते द्विगुणः कामः' इति वसन्तापगमे कामोपशान्तिः । अयं निदाघकालो ग्रीष्मकाल उपागतः संप्राप्तः हे प्रिये । वंशस्थवृत्तमेतत्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

**निशाः शशाङ्कक्षतनील[3]राजयः क्वचिद्विचित्रं जलयन्त्रमन्दिरम् ।**
**मणिप्रकाराः सरसं च चन्दनं शुचौ प्रिये यान्ति जनस्य सेव्यताम् ॥ २ ॥**

**निशा इति** ॥ हे प्रिये, क्वचिच्छशाङ्केन चन्द्रमसा कर्त्रा क्षता दूरीकृता नीलराजयस्तमःपंक्तयो यासां तास्तथोक्ता निशा रात्रयः । 'निशा निशीथिनी रात्रिः' इत्यमरः । क्वचिद्विचित्रं जलयन्त्रेण युक्तं मन्दिरं गृहम् । क्वचिन्मणिप्रकारा मणिविशेषाश्चन्द्रकान्तादयः । क्वचित्सरसं सान्द्रं चन्दनं च शुचौ ग्रीष्मकाले जनस्य सेव्यतामुपभोगविषयतां यान्तीति वचनविपरिणामेनान्वयः ॥

**सुवासितं हर्म्यतलं मनोहरं प्रियामुखोच्छ्वासविकम्पितं[4] मधु ।**

---

1. B[2] क्षम. 2. B[2] समुपागतः. 3. K नीर. 4. K B[2] विकल्पितम्.

सुतन्त्रिगीतं मदनस्य दीपनं शुचौ निशीथेऽनुभवन्ति कामिनः ॥३॥

सुवासितमिति ॥ कामिनो विलासिनः शुचौ ग्रीष्मकाले निशीथेऽर्धरात्रे। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । सुवासितं सुगन्धजलसेकादिना सुगन्धीकृतं मनोहरं सुन्दरं हर्म्यतलं प्रासादतलम् । प्रियामुखस्य कान्तावदनस्योच्छ्वासेन विकम्पितं मधु। मदनस्य कंदर्पस्य दीपनमुद्दीपकं सुतन्त्रिणा गीतं गानं च। 'गीतं गानमिमे समे' इत्यमरः। अनुभवन्ति। आस्वादयन्तीत्यर्थः । एतेनापि ग्रीष्मकालस्य कामिनां मनोहरत्वमुक्तम् ॥

नितम्बबिम्बैः सदुकूलमेखलैः स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नानकषायवासितैः स्त्रियो निदाघं शमयन्ति कामिनाम् ॥४॥

नितम्बेति ॥ स्त्रियो विलासिन्यो दुकूलानि वस्त्राणि मेखला रसनाश्च ताभिः सहितानि तैस्तथोक्तैर्नितम्बबिम्बैः कटिपश्चाद्भागैः 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरः। हारा आभरणानि च तैः सहितास्तैस्तथोक्तैः सचन्दनैश्चन्दनलिप्तैः स्तनैः । स्नाने स्नानकाले यः कषायो लापितसुगन्धिद्रव्यस्तेन वासिताः संजातवासास्तैस्तथोक्तैः शिरोरुहैः केशैः कामिनां निदाघमूष्माणं शमयन्ति दूरीकुर्वन्तीत्यर्थः ॥

नितान्तलाक्षारसरागरञ्जितैर्नितम्बिनीनां चरणैः सनूपुरैः ।
पदे पदे हंसरुतानुकारिभिर्जनस्य चित्तं क्रियते समन्मथम् ॥५॥

नितान्तेति ॥ नितान्तमत्यन्तं लाक्षारसस्य रागेण रञ्जितास्तैस्तथोक्तैः सनूपुरैर्मञ्जीरसहितैः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । पदे पदे प्रतिपदं हंसरुतं मरालशब्दमनुकुर्वन्ति तैस्तथोक्तैर्नितम्बिनीनां चरणैर्जनस्य लोकस्य चित्तमन्तःकरणं समन्मथं मदनसहितम् । 'मदनो मन्मथो मारः' इत्यमरः । क्रियत इत्यर्थः।

पयोधराश्चन्दनपङ्कचर्चितास्तुषारगौरार्पितहारशेखराः ।
नितम्बदेशाश्च सहेममेखलाः प्रकुर्वते कस्य मनो न सोत्सुकम् ॥६॥

पयोधरा इति ॥ चन्दनस्य पङ्केन द्रवेण चर्चिता लिप्ताः । तुषारवद्गौराः शुभ्रवर्णा अर्पिता हारशेखराः श्रेष्ठहारा येषु ते तथोक्ताः पयोधराः स्तनाः । सहेममेखलाः सुवर्णरशनासहिताः । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः। नितम्बदेशाः श्रोणीबन्धाश्च कस्य मनः सोत्सुकं सोत्कण्ठं न प्रकुर्वते प्रकर्षेण न कुर्वन्ति। अपि तु सर्वस्यापीत्यर्थः ॥

समुद्गतस्वेदचिताङ्गसंधयो विमुच्य वासांसि गुरूणि सांप्रतम् ।
स्तनेषु तन्वंशुकमुन्नतस्तना निवेशयन्ति प्रमदाः सयौवनाः ॥७॥

1. B[1] C L 'सुदुकूल' 2. B C C[1] L 'लोहितैः. 3. L 'सुनूपुरैः'. 4. B[1] C[1] शीतलाः. 5. C तुषारहारार्पितगौरशेखराः 6. B[1] बिम्बाश्चलहेम. C नितम्बबिम्बाश्चलहेममेखलाः। 7. B[1] C 'समुद्यत'. 8. C चितार्धसश्चयः 9. C चाच्छांशुक 10. L निवेशयन्ते

समुद्गतेति ॥ समुद्गतो निर्गतो यः स्वेदो घर्मस्तेन चिता व्याप्ता अङ्गसंधयो बाहुमूलादयो यासां तास्तथोक्ताः सयौवनास्तारुण्यसहिता उन्नतस्तना उच्चकुचाः प्रमदाः स्त्रियः सांप्रतमिदानीं गुरूणि जडानि वासांसि वस्त्राणि विमुच्य दूरीकृत्य स्तनेषु कुचेषु तनु सूक्ष्ममंशुकं वासः कञ्चुक्यादि निवेशयन्ति । स्थापयन्तीत्यर्थः ॥

सचन्दनाम्बुव्यजनोद्भवानिलैः सहारयष्टिस्तनमण्डलार्पणैः[1] ।
सवल्लकीकाकलिगीतनिस्वनैर्विबोध्यते[2] सुप्त इवाद्य मन्मथः ॥८॥

सेति । चन्दनाम्बुना चन्दनजलेन । चन्दनद्रवेणेति यावत् । सहितं युक्तं यद्व्यजनं तदुद्भवास्तदुत्पन्ना येऽनिला वायवस्तैः । हारयष्ट्या कुसुममालया सहितानि युक्तानि यानि स्तनमण्डलानि कुचमण्डलानि तेषामर्पणैः । वल्लक्या वीणया सहिताश्च ते काकलिनः सूक्ष्मकलाश्च ते गीतनिस्वना गाननिनादाश्च तैः । 'वीणा तु वल्लकी' इत्यमरः । 'काकली तु कले सूक्ष्मे' इत्यमरः । 'गीतं गानमिमे समे' इत्यमरः । अद्य मन्मथः कामः सुप्त इव निद्रित इव । राजेवेत्यर्थः । विबोध्यत उद्बोध्यत ॥

सितेषु हर्म्येषु निशासु योषितां सुखप्रसुप्तानि[3] मुखानि चन्द्रमाः ।
विलोक्य नूनं[4] भृशमुत्सुकश्चिरं निशाक्षये याति ह्रियेव[5] पाण्डुताम् ॥९॥

सितेष्विति ॥ चन्द्रमा निशासु रात्रिषु सितेषु धवलेषु हर्म्येषु प्रासादेषु योषितां स्त्रीणां सुखेन प्रसुप्तानि निद्रितानि । मुखानि वदनानि चिरं चिरकालं विलोक्यावलोक्य । भृशमत्यन्तमुत्सुक उत्कण्ठितः सन्निशाक्षये रात्रिक्षये ह्रियेव लज्जयेव पाण्डुतां पाण्डुरतां याति गच्छति नूनमिति वितर्के ॥

असह्यवातोद्धत[6]रेणुमण्डला प्रचण्डसूर्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः प्रियावियोगानलदग्धमानसैः ॥१०॥

असह्येति ॥ प्रियावियोगः कान्तावियोगः स एवानलोऽग्निस्तेन दग्धं भस्मीभूतं मानसमन्तःकरणं येषां तैस्तथोक्तैः प्रवासिभिर्विदेशवासिभिरसह्यः सोढुमशक्यो यो वातो वायुस्तेनोद्धतमूर्ध्वक्षिप्तं रेणुमण्डलं यस्याः सा तथोक्ता प्रचण्ड उग्रो यः सूर्यस्य तरणेरातप उष्णं तेन तापिता संतापिता मही पृथ्वी द्रष्टुमपि न शक्यते । गन्तुं न शक्यत इत्यत्र किं वक्तव्यमित्यर्थः ॥

मृगाः प्रचण्डातपतापिता भृशं तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता[7] निरीक्ष्य भिन्नाञ्जनसंनिभं नभः ॥११॥

---

1. L B[1] 'अर्पितैः'.　2. B[1] L 'प्रबुध्यते,' C[1] 'प्रबोध्यते'.　3. C[1] L सुखानि सुप्तानि　4. B[1] 'नियन्त्रणम्'.　5. B[1] 'एव'.　6. C B[1] 'वातोद्गत'.　7. C प्रधापिताः ।

मृगा इति ॥ भृशमत्यन्तं प्रचण्डस्तीक्ष्णतरो य आतप उष्णं तेन तापिताः संतापिताः। महत्या तृषा पिपासया परिशुष्कास्तालवो तेषां ते तथोक्ता मृगा हरिणा भिन्नेनाञ्जनेन संनिभं तुल्यं नभ आकाशं निरीक्ष्य वीक्ष्य तोयं जलमिति शङ्कया वनान्तरेऽन्यद्वने प्रधाविता दुद्रुवुः ॥

सविभ्रमैः सस्मितजिह्म[1]वीक्षितैर्विलासवत्यो मनसि प्रवासिनाम् ।
अनङ्गसंदीपनमाशु कुर्वते यथा प्रदोषाः शशिचारुभूषणाः ॥१२॥

सविभ्रमैरिति ॥ यथा शशिचारुभूषणाः शश्येव चन्द्र एव चारु सुन्दरं भूषणं एषां ते तथोक्ताः प्रदोषाः संध्यासमयाः। प्रवासिनां मनस्यन्तःकरणेऽनङ्गसंदीपनं कुर्वते । तथेत्यध्याहार्यम् । शशिचारुभूषणाः शशी चन्द्रस्तद्वच्चारूणि सुन्दराणि भूषणानि यासां तास्तथोक्ताः विलासवत्यो विलासिन्यः सविभ्रमैर्विभ्रमसहितैः । सस्मितानि सहास्यानि जिह्मानि कुटिलानि वीक्षितानि निरीक्षणानि तैः कृत्वा प्रवासिनां मनस्याशु झटित्यनङ्गसंदीपनं कामस्योद्दीपनं कुर्वत इत्यर्थः ॥

रवेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांसुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन्मुहुः फणी मयूरस्य तले निषीदति ॥१३॥

रवेरिति ॥ रवेः सूर्यस्य मयूखैः किरणैः । 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः। अभितापितः संतापितः। भृशमत्यन्तं पथि मार्गे तप्तपांसुभिरुष्णरजोभिर्विदह्यमानः अवाङ्मुखोऽधोमुखो जिह्मगतिः कुटिलगमनो मुहुर्वारंवारं श्वसञ्छ्वासोच्छ्वासं कुर्वन्फणी सर्पो मयूरस्य बर्हिणः । 'मयूरो बर्हिणो बर्ही' इत्यमरः। तलेऽधोभागे निषीदत्यवतिष्ठत इत्यर्थः ॥

तृषा महत्या [3]हतविक्रमोद्यमः श्वसन्मुहुर्दूर[4]विदारिताननः ।
न हन्त्यदूरेऽपि ग[5]जान्मृगे[6]श्वरो विलोलजिह्व[7]श्चलिताग्रकेसरः ॥ १४ ॥

तृषेति ॥ महत्या तृषा पिपासया हतो विक्रमस्य पराक्रमस्योद्यम उद्योगो यस्य स तथोक्तः। मुहुर्वारंवारं दूराद्विदारितं विस्तारितमाननं मुखं येन स तथोक्तः। विलोलजिह्वश्चलिताश्चञ्चला अग्रकेसरा अग्रसटा यस्य स तथोक्तो मृगेश्वरः सिंहः। 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः। अदूरेऽपि समीपे वर्तमानानिति शेषः। गजान्मातङ्गान्न हन्ति। मारयतीत्यर्थः। न हि जायते स्वस्मिन्क्लेशिते परहनने प्रवृत्तिरिति भावः ॥

[A[8]] मृगाधिपः सिंहोऽदूरे समीपे गजान्हस्तिनो न हन्ति। कि० मृ० महत्याऽधिकतरया तृषा कृत्वा हतो गतो विक्रमस्य पराक्रमस्योद्यमो यस्य सः। अथवा विक्रमलक्षण उद्यमो यस्य स पु० मुहुर्वारं २ श्वसन् । पु० दूरवि० दूरमतिशयेन

1. C जिह्ममीक्षतैः 2. प्रसङ्गिनाम् । 3. A हृत० 4. L K भूरि 5. L K मृगम् 6. L A मृगाधिपः 7. L चलितस्वकेसरः स्खलिताग्र०

8. इतः पूर्ववर्तिश्लोकाना मूलकोषपाठस्त्रुटितः ।

विदारितं प्रसारितं आननं मुखं येन स पु० । विलोला चपला जिह्वा यस्य स । पु० स्खलिताग्रकेसरः स्खलिताश्चलिताग्रकेसराः केसराग्राणि यस्य स ग्रीष्माधिक्यात् सिंहस्यापि पराक्रमः क्षीणत्वमापन्नः किं पुनः कामिनामिति भावः ॥

**विशुष्ककण्ठाहृतसीकराम्भसो गभस्तिभिर्भानुमतोऽनुतापिताः ।**
**प्रवृद्धतृष्णोपहता जलार्थिनो न दन्तिनः केसरिणोऽपि बिभ्यति ॥१५॥**

**विशुष्केति** ॥ विशुष्केण कण्ठेनाहृतं गृहीतं सीकराम्भस्तुषारजलं यैस्ते तथोक्ताः । भानुमतः किरणमालिनः सूर्यस्य । गभस्तिभी रश्मिभिरनुतापिताः संतापिताः । प्रवृद्धतृष्णयात्यधिकपिपासयोपहताः पीडिता अतएव जलार्थिनो जलकाङ्क्षिणो दन्तिनो गजाः केसरिणोऽपि सिंहादपि न बिभ्यति । भयं न प्राप्नुवन्तीत्यर्थः ॥

[A] अर्थः ॥ दन्तिनो गजाः केसरिणः सिंहादपि न बिभ्यति भयं न प्राप्नुवन्ति । किंभूता द० । विशुष्को योऽसौ कण्ठस्तस्मिन्नाहृतानि आनीतानि अम्भसः शीकराणि शीकराम्भांसि शुण्डान्तःस्थजललवा यैस्ते । वमथुः करशीकरः इति हैमः पु०: किं० । भानुमतः सूर्यस्य गभस्तिभिः किरणैरभितापिताः अभि समन्तात्तापिताः । पु०प्रवृद्धा वृद्धिं प्राप्ता या तृष्णा तयोपहता निरुद्योगाहतप्रायाः प्रवृद्धतृष्णोपहताः । पु० किं० जलमर्थयन्ति याचयन्तीति जलार्थिनः अनेन गजा अपि निस्तेजत्वात् सिंहान्नापसर्प्पन्तीति ग्रीष्माऽतिरेको वर्णितः ॥

**हुताग्निकल्पैः सवितुर्गभस्तिभिः कलापिनः क्लान्तशरीरचेतसः ।**
**न भोगिनं घ्नन्ति समीपवर्तिनं कलापचक्रेषु निवेशिताननम् ॥ १६ ॥**

**हुताग्निकल्पैरिति** ॥ सवितुः सूर्यस्य हुताग्निकल्पैर्हुतश्चासावग्निश्च तत्कल्पैस्तत्सदृशैः । तद्वदत्यन्तप्रचण्डैरिति यावत् । गभस्तिभिरंशुभिः क्लान्तं म्लानं शरीरं वपुश्चेतश्च येषां ते तथोक्ताः कलापिनो मयूराः कलापचक्रेषु बर्हमण्डलेषु निवेशितं प्रवेशितमाननं मुखं येन तत्तथोक्तं समीपवर्तिनं भोगिनं सर्पं न घ्नन्ति । न मारयन्तीत्यर्थः ॥

[A] अर्थः ॥ कलापिनो मयूरा भोगिनं सर्पं न घ्नन्ति । किं० कलापिनः । सवितुः सूर्यस्य मरीचिभिरुस्रैः क्लांतं खेदोपहतं शरीरस्य ( ? ) चेतो येषां ते तथा । किं० म० [?] हुतो योऽसौ अग्निर्हुताग्निः तेन कल्पास्तुल्यास्तैः । किं० भो० समीपे वर्त्तते यः स समीपवर्त्ती तम् । पु० कलापचक्रेषु बर्हमण्डलेषु निवेशितं स्थापितं आननं येन तं निवेशिताननम् । अत्र मयूरा अपि हततेजसो जाता इत्यर्थः ॥

**सभद्रमुस्तं परिशुष्ककर्दमं सरः खनन्नायतपोत्रमण्डलैः ।**
**रवेर्मयूखैरभितापितो भृशं वराहयूथो विशतीव भूतलम् ॥ १७ ॥**

---

1. K कण्ठोद्धृत० 2. A अभितापिताः 3. A L मरीचिभिः 4. L B[1] चेतनाः 5 B सुभद्र० 6. A L K परिपाण्डु. 7. J °पोत्र० 8. A J प्रदीप्तभासा रविणाभितापितः, वितापितः

सभद्रेति ॥ भद्रमुस्तेन 'भद्रमोथा' इति प्रसिद्धेन सहितं परिशुष्कः कर्दमः पङ्को यस्मिंस्तत्तथोक्तं सरः सरोवरमायतानि दीर्घाणि यानि पोतृमण्डलानि तैः कृत्वा खनन् । रवेः सूर्यस्य मयूखैः किरणैर्भृशमत्यन्तमभितापितः संतापितो वराहयूथः सूकरसमूहः । 'वराहः सूकरो घृष्टिः' इत्यमरः । भूतलं भूगर्भं विशतीव प्रविशतीवेत्युत्प्रेक्षा ॥

[A] अर्थः ॥ वराहयूथः वराहाणां शूकराणां यूथः समूहो भूतलं पृथ्वीतलं विशतीव प्रवेशं करोतीव । किं कुर्वन् । आयता दीर्घा ये पोतृमण्डला मुखाग्रमण्डलास्तथा तैः सरः खनन् । कथं० सरः सभद्रमुस्तम् । भद्रमुस्तेन गुन्द्रया सह वर्त्तते इति तत् । पुनः कं० परि सामस्त्येन पाण्डुः श्वेतवर्णः अर्थाच्छुष्कः कर्दमो यत्र तत् । कथं० वराहयूथः । प्रदीप्ता सोढुमशक्या भाः कान्तिर्यस्य स प्रदीप्तभास्तेन रविणा सूर्येण अभितापितः ॥

विवस्वता तीक्ष्णतरांशुमालिना सपङ्कतोयात्सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः फणातपत्रस्य तले निषीदति ॥१८॥

विवस्वतेति ॥ तीक्ष्णतरैः प्रचण्डतरैरंशुभिः किरणैर्मलते शोभते तथोक्तेन विवस्वता सूर्येणाभितापितो भेको मण्डूकः । 'भेके मण्डूकवर्षाभू—' इत्यमरः । पङ्कतोयेन कर्दमजलेन सहितं युक्तं तस्मात्तथोक्तात्सरसः सरोवरादुत्प्लुत्य तृषितस्य भोगिनः पन्नगस्य । 'उरगः पन्नगो भोगी' इत्यमरः । फणैवातपत्रं छत्रं तस्य तलेऽधोभागे निषीदति । तिष्ठतीत्यर्थः ॥

[A] किं० विवस्वता तीक्ष्णतरांशुमालिना । अतिशयेन तीक्ष्णग्रीष्मत्वात्तीव्रा येऽशंवः किरणास्तीक्ष्णतरांशवस्तान् मलते धारयतीति तथा तेन । मलमल्लधारणे ( भ्वादि ४९४–९५ ) । कथं० भेकोऽभितापितो विवस्वतेत्यनुवर्त्तनीयम् । अनेन घर्म्मबाहुल्यं सूचितम् ।

समुद्धृताशेषमृणालजालकं विपन्नमीनं द्रुतभीतसारसम् ।
परस्परोत्पीडनसंहतैर्गजैः कृतं सरः सान्द्रविमर्दकर्दमम् ॥ १९ ॥

समुद्धृतेति ॥ समुद्धृतं निष्काशितमशेषं संपूर्णं मृणालजालकं बिससमूहो यस्मात्तत्तथोक्तं विपन्नमीनं समापन्नमीनं द्रुताः पलायिता भीताश्च ते सारसाश्च यस्मात्तत्तथोक्तं सरः सरोवरं परस्परोत्पीडने संहतैः संलग्नैर्गजैः सान्द्रो निविडो विमर्दः सङ्ग्रामः कर्दमः पङ्कश्च यस्मिंस्तत्तथा । यद्वा । सान्द्रो निविडो विमर्देन सङ्ग्रामेण कर्दमः पङ्को यस्मिंस्तत्तथाभूतमित्यर्थः ॥

[A]गजैर्हस्तिभिः सरः तडागः सांद्रः स मनो[?]विमर्देनावगाहेन कर्दमो यत्र तत् ईदृशं तत् कृतम् । किं० सरः समुद्धृतान्युत्पातितान्यन्यशेषमृणालानां समस्तकमलतन्तूनां जालकानि समूहानि यस्मात्तत् । पु० किं० । विपन्नाः स्वेदखिन्ना

1. B J तीव्रतरांशु 2. अत्र मूलकोषपाठस्त्रुटितः 3. L B विखिन्नमीनाद्रुतभीतसारसम्

उपविष्टा वा मीना यत्र तद्विपन्नमीनं । अद्भुतं भीताः सारसा यत्र तत् । अद्भुतवीतसारसं । निषन्नमीनं च तदद्भुतवीतसारसं च तत् । किंभूतैर्गजैः परस्परमुत्पीडनेन संहता एकत्रीभूताः परस्परोत्पीडनसंहतास्तैः[1] ॥

रविप्रभोद्भिन्नशिरोमणिप्रभो विलोलजिह्वाद्वयलीढ[2]मारुतः ।
विषा[3]ग्निसूर्यातपतापितः फणी न हन्ति मण्डूककुलं तृषाकुलः ॥ २० ॥

रवीति ॥ रविप्रभया सूर्यकान्त्योद्भिन्ना निर्गता शिरोमणेर्मूर्धन्यमणेः प्रभा कान्तिर्यस्य स तथोक्तः । विलोलेन चञ्चलेन जिह्वाद्वयेन लीढ आलीढो मारुतः पवनो येन स तथोक्तः । विषाग्निसूर्यातपतापितो विषं गरलमग्निर्दावानलः सूर्यातप उष्णं तैस्तापितोऽत एव तृषाकुलः, फणी सर्पो, मण्डूककुलं भेकसमूहं न हन्ति । न मारयतीत्यर्थः ॥

[A] फणी सर्पो मण्डूककुलं मण्डूकानां कुलं वंशस्तं न हन्ति। किंभूतः फणी रवेः सूर्यस्य प्रभा कान्तिस्तयोद्भिन्ना उत्प्राबल्येन भिन्ना भेदं प्राप्ता शिरोमणिप्रभा शिरस्थमणिप्रभा यस्य स तथा । पुनः किं विलोलं चपलं च तज्जिह्वाद्वयं च विलोलजिह्वाद्वयं तेन लीढ आस्वादितो मारुतो वायुर्येन सः। पुनः किंभूतः विषवत्तीव्रोऽग्निर्बहूष्णो योऽसौ सूर्यातपस्तेन तापितः । पुनः किंभूतः तृषा तृष्णयाकुलो व्याप्तः । अनेनातिघर्माधिक्यं सूचितम् ॥

सफेनलोला[4]यतवक्त्रसंपुटं [5]विनिःसृतालोहितजिह्वमुन्मुखम्[7] ।
तृषाकुलं निःसृतमद्रिगह्व[6]रादवेक्ष[8]माणं महिषीकुलं जलम् ॥ २१ ॥

सफेनेति ॥ सफेनं लोलं चञ्चलमायतं दीर्घं, वक्त्रसंपुटं मुखसंपुटं यस्य तत्तथोक्तम् । विनिःसृता निर्गता आ समन्ताल्लोहिता रक्ता जिह्वा यस्य तत्तथोक्तमुन्मुखमूर्ध्वमुखम् । तृषा पिपासयाकुलं व्याकुलमत एव जलं सलिलमवेक्षमाणं निरीक्षमाणं महिषीकुलमद्रिगह्वराद्गिरिगह्वरान्निःसृतं निर्गतमित्यर्थः । 'अद्रिगोत्रगिरिग्रावा–' इत्यमरः ॥

[A] महिष्याः कुलं महिषीकुलमद्रिगह्वरात् । अद्रेः पर्वतस्य गह्वरः कन्दरा तस्मान्निःसृतं निर्गतं । किंभूतं महिषीकुलं सफेनं च तल्लालाकुलं च सफेनलालाकुलमीदृशं वक्त्रसंपुटं मुखसंकोचं ? यस्य तत् । पुनः किंभूतम् । विनिर्याता मुखाद् बहिर्निर्गता आ समन्तात् लोहिता रक्ता जिह्वा यस्य तत् । पुनः किंभूतम् उन्मुखं । उदूर्ध्वीकृतं मुखं येन तत् । पुनः० तृषा तृष्णया आकुलं व्याप्तं । पुनः किं० जलमवेक्षमाणं । अवेक्षते इत्यवेक्षमाणम् । वंशस्थवृत्तानीमानि। तल्लक्षणं–जतौ तु वंशस्थमुदीरितं जरौ ॥

1. तुलनीयं वल्लभदेवविरचितायां सुभाषितावल्यामुद्धृतं पद्यम् । ग्रीष्मवर्णनं मालविकाग्निमित्रे—२,१२; विक्रमोर्वश्याम्—३,२३; शाकुन्तले—१,३; रघुवंशे–१६, ४३—५४ ।

2. L B पीत 3. L B हुताग्नि 4. A J लालावृत० 5. A J विनिर्गता 6. B[1] कंदरात् 7. B[1] उत्सुकम् 8. B[1] गवेषमाणम् B. अवेक्ष्यमाणम् ।

**पटुतरदवदाहोच्छुष्कसस्यप्ररोहाः परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।**
**दिनकरपरितापक्षीणतोयाः समन्ताद्विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥२२॥**

पटुतरेति ॥ पटुतरोऽतिसमर्थो यो दवो दावस्तस्य दाहोच्छुष्काः दहनोच्छुष्काः सस्यप्ररोहाः सस्याङ्कुरा येषु ते तथोक्ताः । परुषो निष्ठुरो यः पवनो वायुस्तस्य वेगेनोत्क्षिप्तान्यूर्ध्वक्षिप्तानि संशुष्कानि पर्णानि येषु ते तथोक्ताः । समन्तादितस्ततो दिनकरस्य परितापेनातपेन क्षीणानि तोयानि येषु ते तथोक्ताः । उच्चैरुच्चप्रदेशातो वीक्ष्यमाणा अवलोक्यमाना वनान्ता अरण्यप्रान्ता भयं विदधतीत्यर्थः । मालिनीवृत्तमेतत् । तल्लक्षणं तु—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥

[A] वनानामन्ताः वनान्ताः प्रान्ता वीक्ष्यमाणाः सन्तः उच्चैरतिशयेन भयं विदधति भयं कुर्वन्तीत्यर्थः । किं० वनान्ताः । पटुतरोऽधिको योऽसौ दवदाहो दवाग्निसंबन्धी दाहस्तेन लुष्टा दग्धाः सस्यानां शष्पाणां प्ररोहा येषु ते । पुनः० परुषः कठोरो योऽसौ पवनो वायुस्तस्य वेगाधिक्यं तेनोत्क्षिप्तान्युच्छालितानि शुष्कपर्णानि येषां ते । पुनः० समन्तात् सर्वथा दिनकरस्य सूर्यस्य परितापः तस्मात् क्षीणानि स्वल्पीभूतानि शुष्कानि वा तोयानि येषु ते ॥

**श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम् ।**
**भ्रमति गवययूथः सर्वतस्तोयमिच्छञ्छरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥२३॥**

श्वसितीति ॥ शीर्णानि गलितानि पर्णानि पत्राणि यस्य स तादृशो यो द्रुमो वृक्षस्तत्र तिष्ठतीति स तथोक्तो विहगवर्गः पक्षिसमुदायः । श्वसिति श्वासोच्छ्वासं करोति । क्लान्तं म्लानं कपिकुलं वानरसमूहोऽद्रेः पर्वतस्य निकुञ्जं लतागृहम् । 'निकुञ्जकुञ्जौ वा क्लीबे' इत्यमरः । उपयाति गच्छतीत्यर्थः । गवया गोसदृशमृगविशेषास्तेषां यूथः समुदायस्तोयं जलमिच्छन्सर्वत इतस्ततो भ्रमति । अजिह्ममकुटिलं शरभानां कुलं शरभा अष्टापदपशुविशेषास्तेषां कुलं समुदायः कूपादम्बु जलं प्रोद्धरति गृह्णातीत्यर्थः ॥

[A] विहगवर्गः विहगानां वर्गः पक्षिणां वर्गः, सजातीयसमूहो वर्गः । शीर्णानि पतितानि पर्णानि येषां ते, एवंविधा ये द्रुमा वृक्षास्तेषामन्तर्मध्ये वसति । पुनः० क्लान्तं खेदखिन्नं कपिकुलं कपीनां वानराणां कुलं कपिकुलम् । अद्रेः पर्वतस्य निकुञ्जं वनमुपयाति वनं गच्छतीत्यर्थः । पुनर्गवयानामरण्यगवानां यूथः समूहस्तोयं जलमिच्छन् सन् । सर्वतः सर्वस्यां दिशि भ्रमति । पुनः शरभाणामष्टापदजीवानां कुलमजिह्मम् अकुटिलं यथा स्यात्तथा कूपादम्बु पानीयं प्रोद्धरति निष्कासयतीत्यर्थः ॥

**1.** L दाहात् . **2.** A ०दाहप्लुष्ट० . A. ०द्रुमान्तः B[a] e दाहिच्छुक **3.** J[a] शष्प० . **4.** A पारितापात् **5.** A वसति **6.** L वृन्दः **7.** L द्रुपद **8.** L विकुञ्जे **9.** L अजिह्मम् **10.** L प्रोद्धरेत्

**विकचनवकुसुम्भस्वच्छसिन्दूरभासा प्र[1]बलपवनवेगोद्[2]भूतवेगेन तूर्णम्।**
**तट[3]विटपलताग्रालिङ्गनव्याकुलेन दिशि दिशि परिदग्धा भूमयः पावकेन ॥२४॥**

**विकचेति** ॥ विकचः प्रफुल्लो नवो नूतनः कुसुम्भस्तद्वत्स्वच्छो निर्मलो यः सिन्दूरस्तस्य भा इव भाः कान्तिर्यस्य तेन तथोक्तेन। प्रबलस्य पवनस्य वेगेनोद्भूतः संभूतो वेगो यस्य तेन तथोक्तेन । तटविटपानां तीरस्थवृक्षशाखानां लताग्राणां चालिङ्गनेन परिरम्भणेन व्याकुल आकुलस्तेन तथोक्तेन पावकेन वह्निना दिशि दिशि प्रतिदिशं तूर्णं सत्वरं भूमयः परिदग्धाः संदग्धा इत्यर्थः ॥

[A] पावकेन दवाग्निना दिशि दिशि भूमयः परि सामस्त्येन दग्धाः परिदग्धाः। किंभूतेन पावकेन विकचं विकसितं यन्नवं नूतनं कुसुम्भं पुनर्यत् स्वच्छं निर्मलं सिन्दूरं तद्वद्भाः कान्तिर्यस्य तेन। पु० तूर्णं शीघ्रम् प्रबलो योऽसौ पवनस्तेनोद्भूतः प्रकटितो वेगो यस्य तेन । पु० तनवः कृशाः सूक्ष्माः विकचाः विकस्वराश्च ये लताग्रा लतानामग्रप्रदेशाश्च तनुविकचलताग्रास्तेषामालिङ्गनं तत्र व्याकुलस्तेन। तरुविटपलता० इति वा पाठः तत्र तरूणां विटपाः शाखाश्च लताग्राश्च तेषामालिङ्गनं नेन व्याकुलो भयकृत तेन ॥ २४ ॥

**ज्वलति[1] पवनवृद्धः[2] पर्वतानां[4] दरीषु स्फुटति[5] पटुनिनादैः[6] शुष्कवंशस्थलीषु ।**
**प्रसरति तृणमध्ये[7] लब्धवृद्धिः क्षणेन ग्लपयति[8] मृगवर्गं[9] प्रान्तलग्नो दवाग्निः[10] ॥२५॥**

ज्वलतीति ॥ पवनेन वायुना वृद्धो वृद्धिं प्राप्तो दवाग्निर्दावानलः । 'दवदावौ वनानिलौ' इत्यमरः। पर्वतानां दरीषु कन्दरेषु ज्वलति। तथा शुष्का वंशा वेणवो यासु ताः स्थल्यः अकृत्रिमभूमयस्तासु पटुनिनादैः स्फुटतरध्वनिभिः स्फुटति विकासभावमाप्नोति। तथा क्षणेन क्षणादेव लब्धा प्राप्ता वृद्धिर्येन तथोक्तः संस्तृणमध्ये प्रसरति। तथा प्रान्तलग्नः सन्मृगवर्गं हरिणसमूहं ग्लपयति व्याकुलं करोतीत्यर्थः।

[A] हि निश्चितं वह्निर्मृगाणां वर्गः समूहस्तं तपयति। किं० वह्निः प्रान्तेषु लग्नः वनान्तेषु लग्नः। पु० पवनविद्धः सन् वायुप्रेरितः सन्। पर्वतानां दरीषु गुहासु पतति । पु० पटुनिनादः सन् प्रकटरवः सन्। शुष्कवंशस्थलीषु शुष्का वंशा वेणुवृक्षा यत्रेदृश्यो याः स्थल्यः स्थलभूमयः तथा तासु स्फुटति। स्फुट स्फुट इति शब्दं करोतीत्यर्थः। तृणमध्ये क्षणेन लब्धवृद्धिः प्राप्तारिकः सन् प्रसरति।

---

**1.** B[1] G ध्वनति A पतति **2.** L पवनविद्धः **3.** A तनुविकच० **4.** B[1] G पर्वतान्तर्दरीषु **5.** G स्फुरति **6.** B[1] G K पटुनिनादः **7.** B[1] C[1] तृणमध्यम् **8.** B[1] L क्षपयति K तपयति **9.** B[1] G मृगयूथम् **10.** A हि वन्हिः।

**बहुतर इव जातः शाल्मलीनां वनेषु स्फुरति कनकगौरः कोटरेषु द्रुमाणाम्**
**परिणतदलशाखानुत्पतन्प्रांशुवृक्षान्भ्रमति पवनधूतः सर्वतोऽग्निर्वनान्ते ॥२६॥**

बहुतर इति ॥ अग्निः शाल्मलीनां वनेषु बहुतरः प्रचुररूपो जात इव स्फुरति । द्रुमाणां कोटरेषु शाखागह्वरेषु कनकगौरः काञ्चनगौरः स्फुरति । पवनेन वायुना धूतः कम्पितः सन्नत एव परिणताः परिपक्वा दलानि पर्णानि शाखाश्च येषां तांस्तथोक्तान्प्रांशुवृक्षानुन्नतद्रुमानुत्पतन्सन् । सर्वतः समन्ततो भ्रमति । भ्रमणं करोतीत्यर्थः ॥

[A] अग्निः । पवनधूतः पवनप्रेरितः सन् । वनान्ते वनस्यान्तः वनान्तस्तस्मिन् भ्रमति । किं० अग्निः शाल्मलीनां शाल्मलीवृक्षाणां वनेषूत्प्रेक्षते । पटुतरोऽतिशयेन प्रकटितसाधनो जात इव । पुनर्द्रुमाणां वृक्षाणां कोटरेषु कनकवद्गौरो गौरवर्णः स्फुरति लगति । किं कुर्वन् शुष्काश्च ते वृक्षाश्च शुष्कवृक्षास्तान् निर्दहन् प्रज्वालयन् । किंविशिष्टान् शुष्कवृक्षान् परिहृतदलशाखान् परिहृतानि गतानि दलानि पत्राणि शाखा विटपाश्च येषां ते तथा तान् ॥

**गजगवयमृगेन्द्रा वह्निसंतप्तदेहाः सुहृद इव समेता द्वन्द्वभावं विहाय ।**
**हुतवहपरिखेदादाशु निर्गत्य कक्षाद्विपुलपुलिनदेशान्निम्नगां संविशन्ति ॥२७॥**

गजेति ॥ वह्निना दावाग्निना संतप्तो देहः शरीरं येषां ते तथोक्ता अत एव द्वन्द्वभावं वैरभावं विहाय त्यक्त्वा सुहृदो मित्राणीव समेता संगताः गजगवयमृगेन्द्रा गजो हस्ती गवयो गोसदृशो मृगविशेषः मृगेन्द्रः सिंहश्च ते हुतवहस्य वह्नेः परिखेदात्संतापात् । यद्वा हुतवहस्य परिखेदो यत्र तस्मात्तथोक्तात् । कक्षाद् गिरिगह्वरादाशु झटिति निर्गत्य विपुलो महान्पुलिनदेशस्तीरप्रान्तो यस्यास्तां तथोक्तां निम्नगां नद संविशन्ति । आश्रयन्त इत्यर्थः ॥

[A] गजाश्च गवया वनगवाश्च मृगेन्द्राः सिंहाश्च गजगवयमृगेन्द्राः । हुतवहपरिखेदात् हुतवहस्याग्नेः परिखेदः परितापः तस्मात् । द्वन्द्वस्य वैरस्य भावो द्वन्द्वभावः शत्रुत्वं । विहाय त्यक्त्वा । आशु शीघ्रं निम्नगां नदीमाश्रयन्ते । किं कृत्वा कक्षात् तृणप्रदेशान्निर्गत्य । कीदृशाः वह्निसंतप्तदेहाः वह्निसंतप्ता देहा येषां ते । पुन० सुहृदो मित्राणीव समेता मिलिताः । किं० निम्नगाम् । विपुलो विस्तीर्णः पुलिनस्य देशः प्रदेशो यस्यां सा तथा ताम् ॥

---

1. G पटुतर इव यातः 2. G स्फुटति 3. G B[1] परिणतदलशाखादुत्पत्याशु वृक्षात् A परिहृतदलशाखान्निर्दहन् शुष्कवृक्षान् 4. G दहति 5. सर्वशः । 6. B[1] C समन्तात् 7. G शत्रुभावम् 8. G निर्गम्य 9. G ०देशाम् 10. B[1] G आश्रयन्ते ।

**कमलवनचिताम्बुः पाटलामोदरम्यः सुखसलिलनिषेकः सेव्यचन्द्रांशुहारः ।**
**व्रजतु तव निदाघः कामिनीभिः समेतो निशि सुललितगीते हर्म्यपृष्ठे सुखेन॥२८॥**

**कमलेति** ॥ सुललितमतिरमणीयं गीतं गानं यस्यास्तस्याः संबोधनं हे सुललितगीते । कमलानां पङ्कजानां वनेन समुदायेन चितं व्याप्तमम्बु जलं यस्मिन्स तथोक्तः । पाटलानां पाटलकुसुमानामामोदो गन्धो रम्यो रमणीयो यस्मिन्स तथोक्तः । यद्वा पाटलामोदेन रम्यो रमणीय इति । सुखः सुखकरः सलिलस्य निषेकः स्नानं यस्मिन्स तथोक्तः । सेव्याः सेवितुं योग्याश्चन्द्रस्यांशवः किरणा हाराः कुसुममालाश्च यस्मिन्स तथोक्तः कामिनीभिः समेतो युक्तो निदाघो निदाघकालो निशि रात्रौ हर्म्यपृष्ठे प्रासादतले सुखेन तव व्रजतु । गच्छत्वित्यर्थः ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कवि-श्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये ग्रीष्मवर्णनं नाम प्रथमः सर्गः ।

[A] **कविर्भोजराजं वदति ।** हे राजन् ! तव निदाघो ग्रीष्मः । हर्म्यपृष्ठे गृहपरिभोगे । सुखेन कामिनीभिर्ललनाभिः समेतं[1] सार्द्धम्[2] । व्रजतु गच्छतु । कैः निशि रात्रौ सुललितगीतैः[3] सु अतिशयेन ललितानि मनोहराणि यानि गीतानि तैः । किं० निदाघः कमलवनैः पङ्कजकाननैः निश्चितं व्याप्तमम्बु यत्र सः । पु० पाटलानामामोदः परिमलस्तेन रम्यो रमणीयः । पु० सुखः सुखदायी सलिलनिषेको जलसेवनं स्नानादिर्यत्र स सुखसलिलनिषेकः । पु० सेव्यः सेवनीयश्चन्द्रांशुमयो हारो यत्र सः । अत्रैतानि वस्तूनि ग्रीष्मतापहारीणि भवन्तीति भावः । यदुक्तम्—

स्नानं सुशीतं सलिलं सरोजं,सरोवरं शीतकरः सुगन्धः ।
सन्ध्या स्त्रियः सैकतिकीतटानि,ग्रीष्मेऽतिहर्षाय भवन्त्यभूरि ॥

मालिनीवृत्तानीमानि सप्तकाव्यानि । तल्लक्षणं-'ननमययुतेयं मालिनी भोगिलोकैः' ॥२८॥

श्रीमान्कीर्त्तिवरसूरिगुणाकराणां पट्टेऽनुवै अमरकीर्त्तिविनिर्म्मितायां ।
श्रीमद्विशेष महा······काव्यवृत्तौ, सर्गोऽजनि प्रथम एष नृपाभिरम्यः ॥

इति अमरकीर्त्तिसूरिकृतायां टीकायां श्रीग्रीष्मर्तुवर्णनो नाम प्रथमः सर्गः ॥

---

1. B[1] 'जाला:' 2. A समेतम्: 3. B[1] 'सुललितगीतैः' ।

## प्रावृड्-वर्णनम्

अथ क्रमप्राप्तं वर्षाकालं वर्णयति—

**ससीकराम्भोधरमत्तकुञ्जर[1]स्तडित्पताकोऽशनिशब्दमर्दलः[2] ।**
**समागतो राजवदुद्धतद्युति[3]र्घनागमः[4] कामिजनप्रियः प्रिये ॥१॥**

**ससीकरेति** ॥ हे प्रिये, ससीकरः साम्बुकणो योऽम्भोधरो जलधरः स एव मत्तः प्रमत्तः कुञ्जरो गजो यस्य स तथोक्तः । पक्षे ससीकराम्भोधर इव मत्तः कुञ्जरो यस्येति । 'सीकरोऽम्बुकणाः स्मृताः' इत्यमरः । तडिद्विद्युदेव पताका यस्य स तथोक्तः । पक्षे तडिदिव पताका यस्येति । 'तडित्सौदामिनी विद्युत्' इत्यमरः । अशनिशब्द एव मर्दलः । पक्षे अशनिर्वज्र इव यः शब्दो निनादः स एव मर्दलो वाद्यविशेषो यस्य स तथोक्तः । उद्धतद्युतिरुत्कटकान्तिः कामिजनप्रियो घनागमो वर्षाकालो राजवत्समागतः । आगत इत्यर्थः । वंशस्थं वृत्तम् । लक्षणं तूक्तम् ॥

[A] हे प्रिये वल्लभे, घनागमः मेघागमः समागतः । किं० कामिनश्च ते जनाश्च कामिजनास्तेषां प्रियो वल्लभः । किं कुर्वन् राजवद् नृपवद् ध्वनिं रवमुद्वहन् । यथा राजा दुन्दुभ्यादिना ध्वनिं कुर्वन् समायाति तथाऽयमपि गर्जारवं कुर्वन् समायाति । पु० सह शीकरैर्जलकणैः वर्तत इति सशीकर एवंविधो योऽसावम्भोधरो मेघः स एव मत्तः कुञ्जरो हस्ती यत्र सः । पु० तडितो विद्युत एव पताका यस्य सः। पु० अशनेर्वज्रस्य शब्दसदृशो गर्जितशब्दः स एव मर्दलो यत्र सः । अनेन वर्षा-ऋतोरुत्कर्षः सूचितः ॥१॥

**नितान्तनीलोत्पलपत्रकान्तिभिः क्वचित्प्रभिन्नाञ्जनरा[5]शिसंनिभैः ।**
**क्वचित्सगर्भप्रमदास्तनप्रभैः समाचितं व्योम घनैः समन्ततः ॥२॥**

**नितान्तेति** ॥ क्वचिन्नितान्तमत्यन्तं नीलानि कृष्णानि यान्युत्पलानि कुवलयानि तेषां पत्राणां दलानां कान्तिरिव कान्तिर्येषां तैस्तथोक्तैः । क्वचित्कुत्रचिद्भागे प्रभिन्नो योऽञ्जनराशिः कज्जलसमूहस्तेन संनिभैः सदृशैः । क्वचित्सगर्भाणां गर्भवतीनां प्रमदानां स्त्रीणां ये स्तनाः कुचास्तेषां प्रभेव प्रभा कान्तिर्येषां तैस्तथोक्तैः । घनैर्मेघैर्व्योमाकाशम् । समन्तत इतस्ततः समाचितं व्याप्तमित्यर्थः ॥

[A] व्योमाकाशम् समन्ततः सर्वासु दिक्षु । घनैर्मेघैः । समाचितं व्याप्तम् । कथंभूतैर्घनैः क्वचित् कस्मिंश्चित् प्रदेशे । प्रभिन्नं विदीर्णभावमाप्तम् अञ्जनं तस्य राशिः पुञ्जस्तेन सन्निभास्तुल्यास्तैः । पुन० क्वचित्प्रदेशे सगर्भा या प्रमदा तस्याः स्तनौ तद्वत्प्रभा येषां तैः नीलकान्ति[6]र्यैः ।

---

1. B[1] वारणः G रक्तकुञ्जरः 2. G मर्दनः 3. B[1] उन्नतध्वनिः G उद्यतध्वनिम्
✓ 4. 'अयं स कालः संप्राप्तः समयोऽद्य **जलागमः**' इति रामायणीयं प्रावृड्-वर्णनम् (४,२८)
✓ उपजीव्यत्वेन तुलनीयम् । सुभाषितावल्याम्—१७१८—१७९०; रघुवंशे—१९,३७ द्र०
5. C[1] रांग । 6. अत्र मूलकोषपाठस्त्रुटितः ।

**तृषाकुलैश्चातकपक्षिणां कुलैः प्रयाचितास्तोयभरावलम्बिनः ।**
**प्रयान्ति मन्दं बहुधारवर्षिणो बलाहकाः श्रोत्रमनोहरस्वनाः ॥३॥**

तृषेति ॥ तृषा पिपासा तयाकुलैर्व्याकुलैश्चातकपक्षिणां कुलैः समुदायैः प्रयाचिताः प्रार्थितास्तोयभरेण जलभरेणावलम्बन्त इति तथोक्ताः । बह्व्यो धारा यस्यां क्रियायां यथा भवन्ति तथा वर्षन्ति ते तथोक्ताः । श्रोत्रस्य श्रवणस्य मनोहर आह्लादकरः स्वनः शब्दो येषां ते तथोक्ता बलाहका मेघाः । 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' इत्यमरः । मन्दं प्रयान्ति । गगने संचरन्तीत्यर्थः ॥

[A] बलाहका मेघाः । मन्दं प्रयान्ति मन्दं मन्दं गच्छन्तीत्यर्थः । किं० तृषाकुलैश्चातकपक्षिणां कुलैः समूहैः प्रयाचिताः तृषया आकुला व्याप्तास्तैः । चातकाः पपीहाः पक्षिणश्च तेषां कुलैः समूहैः याचिताः जलपानार्थमभ्यर्थिताः । कुलं तेषां सजातीयानां हैमः (?) ॥ पु० तोयभरेण जलभारेणावलम्बन्ते नम्रा भवन्तीति तोयभरावलम्बिनः ! पु० बलाहकाः बहु प्रचुरं वारि वर्षन्तीत्येवंशीलाः । पु० श्रोत्रयोः कर्णयोः मनोहरोऽभिरामः स्वनः शब्दो येषां ते ॥

**बलाहकाश्चाशनिशब्दमर्दलाः सुरेन्द्रचापं दधतस्तडिद्गुणम् ।**
**सुतीक्ष्णधारापतनोग्रसायकैस्तुदन्ति चेतः प्रसभं प्रवासिनाम् ॥४॥**

बलाहका इति ॥ अशनिशब्दमर्दला अशनिर्वज्रस्तस्य शब्द एव मर्दलो रणवाद्यविशेषो येषां ते तथोक्ताः । तडिद्विद्युदेव गुणो ज्या यस्य तत्तथोक्तम् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । सुरेन्द्रचापमिन्द्रधनुः । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः दधतो धारयन्तो बलाहका मेघाश्च सुतीक्ष्णानां धाराणां जलधाराणां पतनान्येवोग्रसायकास्तीक्ष्णबाणास्तैः कृत्वा प्रवासिनां प्रोषितानां चेतोऽन्तःकरणं प्रसभमत्यन्तं तुदन्ति । व्यथयन्तीत्यर्थः ॥

[A] बलाहका मेघा युगपत्समकालं प्रवासिनां पथिकजनानाम् चेतस्तुदन्ति पीडयन्ति । किं० बलाहकाः अशनिर्वज्रं तस्य शब्दवच्छब्दो यस्येदृशो गर्जितशब्दस्तेन भीषणा भयकारकाः । किं कुर्वन्तः सुरेन्द्रचापम् इन्द्रधनुर्दधतः । किं० तडिद्विद्युदेव गुणः प्रत्यञ्चा यस्य तम् । पु० किं० बलाहकाः सुतीक्ष्णानि यानि धारापतनानि तान्येवोग्राः सायका यत्र ते ।

---

1. B[1] नव 2. L बहुवारिवर्षिणः । 3. B[1] L A भीषणाः B[1] K भूषणा
4. L सतीक्ष्ण, सुतीव्र 5. B[1] L सायकाः 6. B[1] L ध्वनिभिः ।

प्रभिन्नवैदूर्यनिभैस्तृणाङ्कुरैः समाचिता प्रोत्थितकन्दलीदलैः ।
विभाति शुक्लेतररत्नभूषिता वराङ्गनेव क्षितिरिन्द्रगोपकैः ॥५॥

प्रभिन्नेति ॥ प्रभिन्नेन वैदूर्येण नीलमणिना निभाः सदृशास्तैस्तथोक्तैस्तृणाङ्कुरैः प्रोत्थितकन्दलीदलैः प्रोत्थितानि निर्गतानि यानि कन्दलीनां दलानि पत्राणि तैः 'द्रोणपर्णी स्निग्धकन्दा कन्दली' इति शब्दार्णवः । इन्द्रगोपकैः कृमिविशेषैश्च समाचिता व्याप्ता क्षितिर्धरित्री । 'धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः । शुक्लेतरैः कृष्णादिवर्णैं रत्नैर्मणिभिर्भूषिता शोभिता वराङ्गनेवोत्तमनायिकेव । विभाति शोभत इत्यर्थः ॥

[A] क्षितिः पृथ्वी । इन्द्रगोपकैर्जीवविशेषैर्विभाति । 'इन्द्रगोपस्त्वग्निरजो वैराटस्तितिभोऽग्निकः' इति हैमः । कथं॰ क्षितिः । तृणानां कशाणामङ्कुरास्तैः समाचिता व्याप्ता । कथं॰तृणाङ्कुरैः प्रभिन्नं खण्डशः कृतं यद्वैडूर्यं प्रभिन्नवैडूर्यं तेन निभास्तुल्यास्तथा तैः । पु॰ कथंभूतैः प्रोत्थितानि निर्गतानि कन्दलीनां दलानि पर्णानि येषु ते तैः । क्षितिः का इव । वराङ्गना इव । वरा श्रेष्ठा चासावङ्गना च वराङ्गना । कथं॰ वराङ्गना । कृष्णाच्छुद्राभवर्णादितराण्यर्थाद्रक्तप्रभृतिवर्णासक्तानि यानि रत्नानि तैर्भूषिता कल्पितालङ्कारा ॥

सदा मनोज्ञं स्वनदुत्सवोत्सुकं विकीर्णविस्तीर्णकलापशोभितम् ।
ससंभ्रमालिङ्गनचुम्बनाकुलं प्रवृत्तनृत्यं कुलमद्य बर्हिणाम् ॥६॥

सदेति ॥ सदा सर्वदा । मनोज्ञं सुन्दरम् । स्वनच्छब्दायमानमुत्सवोत्सुकं हर्षेणोत्कण्ठितम् । यद्वोत्सवे हर्ष उत्सुकमुत्कण्ठितम् । विकीर्णः प्रसारितो विस्तीर्णो लम्बमानो यः कलापो बर्हस्तेन शोभितम् । ससंभ्रमं ससंवेगं यदालिङ्गनं परिरम्भणं चुम्बनं च तत्राकुलं व्याकुलं बर्हिणां कलापिनां कुलं प्रवृत्तमारब्धं नृत्यं नर्तनं येन तत्तादृशमद्यास्तीत्यर्थः ।

[A] अद्य वर्षा-ऋतौ बर्हिणां मयूराणां कुलं प्रवृत्तनृत्यं प्रवृत्तं प्रारब्धं नृत्यं येन तदीदृशं वर्त्तते । कुलं कीदृशम् । सदा मनोज्ञं मनोहरम् । पु॰ सुरतस्य सम्भोगस्योत्सवस्तस्मै उत्सुकमुत्कण्ठितम् । तथा पु॰ विकीर्णा ये केशास्तद्वदाभा कान्तिर्यस्य स एवंविधो योऽसौ कलापो बर्हः विकीर्णकेशाभकलापस्तेन शोभितम् ।

---

1. प्रोहित 2. L कण्ठे वररत्नभूषिता A L कृष्णेतररत्नभूषिता 3. तु. रामायणम् ४,२८,२४ 4. B B[1] K मनोज्ञाम्बुदनादसोत्सुकम् A G मनोज्ञं सुरतोत्सवोत्सुकम् 5. B[1] K विभाति 6. G केशालकलाप 7. ABKL सविभ्रमा॰ 8. G प्रवृद्ध॰
इति तु. रामायणम् ४,२८,३३

"कलापो भूषणे बर्हे" इत्यमरः। पु० क० सविभ्रमं सविलासं यदालिङ्गनं पुनश्चुम्बनं तत्राकुलं सस्पृहम्। अत्र मयूरा अपि सुरतोत्सुका भवन्ति किं पुनः कामिनां वाच्यम् ॥

निपातयन्त्यः परितस्तटद्रुमान्प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः सुदुष्टा इव जातविभ्रमाः प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥७॥

निपातयन्त्य इति ॥ प्रवृद्धो वेगः प्रवाह उत्साहो वा येषां तैस्तथोक्तैः। अनिर्मलैः कलुषैर्मलिनैर्वा सलिलैर्जलैर्लावण्यजलैर्वा । 'सलिलं कमलं जलम्' इत्यमरः । परितः समन्ततस्तटद्रुमांस्तटप्ररूढवृक्षान्पितृमातृकुलजनाभिभावकान्वा निपातयन्त्यः समूलमुन्मूलयन्त्यो नाशयन्त्यो वा सुदुष्टाः स्त्रिय इव जात उत्पन्नो विभ्रमः शृङ्गारादिचेष्टाभेदो यासां तास्तथोक्ताः। जातविभ्रमाः समुत्पन्नभ्रमविशिष्टा नद्यस्त्वरितं शीघ्रं पयोनिधिं समुद्रं प्रयान्ति । गच्छन्तीत्यर्थः ॥

[A] सरितस्त्वरितं शीघ्रं पयोनिधिं समुद्रं प्रयान्ति । नद्यः किं कुर्वत्यः। परितः समन्तात् तटद्रुमान्निपातयन्त्यो जलोद्रेकात्। किं० नद्यः अनिर्मलैर्मलिनैः सलिलैर्जलैः प्रवृद्धा वेगा यासां ताः। नद्यः का इव जातविभ्रमा जात उत्पन्नो विभ्रमो यासां तादृश्यः प्रदुष्टाः स्त्रिय इव। यथा प्रदुष्टाः रजोदूषिताः स्त्रियः त्वरितं प्रियं प्रयान्ति। तथा नद्योऽपि । अत्राचैतन्यरूपा नद्योपि प्रियं समुद्रं यान्ति। कामिनीनां पुनः किं वाच्यम् ॥

तृणोत्करैरुद्गतकोमलाङ्कुरैर्विचित्रनीलैर्हरिणीमुखक्षतैः ।
वनानि वैन्ध्यानि हरन्ति मानसं विभूषितान्युद्गतपल्लवैर्द्रुमैः ॥८॥

तृणोत्करैरिति ॥ उद्गता निर्गताः कोमला अङ्कुरा येषां तैस्तथोक्तैः। विचित्रनीलैर्हरिणीमुखैः क्षताः खण्डितास्तैस्तथोक्तैस्तृणोत्करैरुद्गता निर्गताः पल्लवाः किसलयानि येषां तैस्तथोक्तैः। 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । द्रुमैर्वृक्षैः कृत्वा विभूषितानि शोभितानि वैन्ध्यानि विन्ध्यसम्बन्धीनि वनानि काननानि । 'गहनं काननं वनम्' इत्यमरः। मानसमन्तःकरणं हरन्तीत्यर्थः ॥

[A] वनानि काननानि मानसं चित्तं हरन्ति । कामिनामिति गम्यम्। किं० वनानि हरिणीमुखकृतैस्तृणोच्चयैश्चितानि । हरिणीनां मुखानि हरिणीमुखानि तैः कृताः खण्डितास्तथा तैः। तृणोच्चयैः तृणसमूहैश्चितानि व्याप्तानि। किं० तृणोच्चयैः। उद्गता उत्पन्नाः कोमलाः अङ्कुरा येषां ते। पु० नीलैः नीलवर्णैः हरितैरित्यर्थः । किं०

---

1. B[1] K विपाटयन्त्यः, उत्पातयन्त्यः 2. L प्रवृद्धवेगाः 3. B[1] K प्रहृष्टाः, प्रकामाः, 4. तु० रामायणम् ४,२८,३९ । 5. B[1] K. L तृणोद्गमैः, तृणोच्चयैः, 6. उन्नत, उद्गतकोशकुड्मलैः, कर्दमकोमलांकुरैः। 7. G चितानि 8. B[1] G लेखैः 9. B[1] B L रम्याणि 10. L पल्लवद्रुमैः ।

वनानि । वैन्ध्यानि मृगयायोग्यानि । पु० उद्गता उत्पन्ना ये वंशानां कुड्मलास्तैर्विभूषितानि शोभितानि । तत्र उत्पन्नपल्लवैर्द्रुमैः विभूषितानि ॥

विलोलनेत्रोत्पलशोभिताननैर्मृगैः समन्तादुपजातसाध्वसैः ।
समाचिता सैकतिनी वनस्थली समुत्सुकत्वं प्रकरोति चेतसः ॥९॥

विलोलेति ॥ विलोलानि चञ्चलानि यानि नेत्रोत्पलान्युत्पलसदृशानि नेत्राणि तैः शोभितानि भूषितान्याननानि वदनानि येषां तैस्तथोक्तैः । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । उपजातसाध्वसैः संजातभयैर्मृगैर्हरिणैः । 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः । समन्तादितस्ततः समाचिता व्याप्ता सैकतिनी सिकतासंबन्धिनी वनस्थल्यकृत्रिमारण्यभूमिश्चेतसोऽन्तःकरणस्य समुत्सुकत्वमौत्सुक्यं प्रकरोति ।

[A] वनस्थली चेतसोऽर्थात्कामिजनस्य चेतसः समुत्सुकत्वम् । रामामिलनोत्कण्ठितं प्रकरोति । किं० मृगैर्हरिणैः समन्तात् समाचिता व्याप्ता । किं० विशेषेण लोलानि चपलानि पुनर्नीलानि यानीक्षणानि नेत्राणि तैः शोभितमाननं येषां तैः । पु० उपजातमुत्पन्नं साध्वसं भयं येषां तैः । किं० सैकतिनी सिकतायाः बालुकायाः समूहः सैकतं तेन युक्ता सै० ॥

अभीक्ष्णमुच्चैर्ध्वनता पयोमुचा घनान्धकारीकृतशर्वरीष्वपि ।
तडित्प्रभादर्शितमार्गभूमयः प्रयान्ति रागादभिसारिकाः स्त्रियः ॥१०॥

अभीक्ष्णमिति ॥ अभीक्ष्णं मुहुर्मुहुः । 'मुहुर्मुहुः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । उच्चैरुच्चस्वरेण ध्वनता शब्दं कुर्वता पयोमुचा मेघेन घनान्धकारीकृतशर्वरीष्वपि अघनान्धकारा घनान्धकारा यथा संपद्यन्ते तथा कृताश्च ताः शर्वर्यो रात्रयो यथा तथाभूतासु तडित्प्रभया विद्युत्कान्त्या दर्शिता मार्गभूमयो यासां तास्तथोक्ता अभिसारिकाः स्त्रियो रागात्कान्तानुरागेण । संकेतमिति शेषः । गच्छन्तीत्यर्थः । अभिसारिकालक्षणमुक्तममरसिंहेन—'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इति ॥

[A] अभिसारिकाः स्त्रियः साङ्केतिकस्थानम् अभिसरन्ति रात्रौ गच्छन्तीत्यभिसारिकाः । अभिसारिकाः स्त्रियः घनान्धकारीकृतशर्वरीष्वपि । घनैः मेघैः अन्धकाररूपाः कृताः घनान्धकारीकृता एवंविधा याः शर्वर्यः तासु रागात्प्रयान्ति गच्छन्ति कान्तमिति शेषः । कथं० अभिसारिकाः स्त्रियः तडितो विद्युतः प्रभा कान्तिस्तया दर्शिता मार्गभूमिर्यासां ताः । किं० सु० उच्चैरतिशयेन पयोमुचां मेघानां ध्वनितैर्गर्जितैः सुतीक्ष्णं गाढं युक्तास्विति शेषः । अभीष्टमुच्चैरिति वा पाठः तत्राभीष्टं प्रियम् ॥

---

1. G नीलेक्षण 2. G उपयात 3. B[1] G शैवलिनी । 4. B[1] K L सुतीक्ष्णम्
5. B[1] ध्वनताम् G ध्वनितैः 6. L पयोमुचाम् 7. B[1] K L घनान्धकारावृत ।

**पयोधरैर्भीमगभीरनिस्वनैस्तडिद्भिरुद्वेजितचेतसो भृशम् ।**
**कृतापराधानपि योषितः प्रियान्परिष्वजन्ते शयने निरन्तरम् ॥१.११॥**

पयोधरैरिति ॥ भीमो भयानको गभीरो गम्भीरो निस्वनो निर्घोषो येषां तैस्तथोक्तैः । 'स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः' इत्यमरः । पयोधरैर्मेघैस्तडिद्भिर्विद्युद्भिश्च भृशमत्यन्तमुद्वेजितमुद्विग्नं चेतोऽन्तःकरणं यासां तास्तथोक्ता योषितो नार्यः । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः कृतोऽपराधोऽन्यायः परवनितानिरीक्षणादिर्यैस्तांस्तथोक्तानपि प्रियाञ्शयने निरन्तरं निरवकाशं यथा भवति तथा । परिष्वजन्ते आलिङ्गन्त इत्यर्थः ॥

[A] योषितः स्त्रियः कृतापराधान् । कृता अपराधाः अन्ययोषिद्गमनादिरूपा यैस्ते । ईदृशानपि प्रियान् भर्तॄन् । शयने शय्यायां निरन्तरमनवरतम् । परिष्वजन्ते आलिङ्गन्ति । कथं० यो० पयोधरैर्मेघैः भृशम् उद्वेजितचेतसः उद्वेजितं पीडितं चेतो यासां ताः । किं० प० भीमो भयकृत् पुनर्गभीरश्च निस्वनः शब्दो येषां तैः । किं० स्वनद्भिः शब्दायमानैः । अनेनात्र कामोद्रेकः सूचितः ॥

**विलोचनेन्दीवरवारिबिन्दुभिर्निषिक्तबिम्बाधरचारुपल्लवाः ।**
**निरस्तमाल्याभरणानुलेपनाः स्थिता निराशाः प्रमदाः प्रवासिनाम् ॥१.१२॥**

विलोचनेति ॥ विलोचनानि नेत्राणीन्दीवराणीव नीलोत्पलानीवेति विलोचनेन्दीवराणि तेषां ये वारिबिन्दवो जलबिन्दवस्तैः कृत्वा निषिक्ताः संसिक्ताः बिम्बाधरा बिम्बसदृशाधराश्चारुपल्लवा इवेति ते यासां तास्तथोक्ताः । बिम्बपदेनारक्तत्वं पल्लवपदेन च कोमलत्वं व्यज्यते । निरस्तानि त्यक्तानि माल्यान्याभरणानि भूषणान्यनुलेपनानि चन्दनादीनि याभिस्तास्तथोक्ताः । प्रवासिनां प्रोषितानां प्रमदाः स्त्रियो निजरमणसमागमसङ्गजनितसुखे निराशा आशारहिताः स्थिता आसन्नित्यर्थः ॥

[A] प्रवासिनां पथिकजनानां प्रमदाः निराशाः स्थिताः वर्षास्ववश्यं वयमागमिष्याम इत्यवधिलोपान्निराशाः स्थिताः । किं० प्रमदाः विलोचनान्येवेन्दीवराणि नीलकमलानि तत्र ये वारिबिन्दवस्तैः अर्थादश्रुभिर्निषिक्ताः बिम्बाकारा अधरा एव चारुपल्लवा यासां ताः । निरस्तानि माल्यानि पुष्पदामानि आभरणानि चानुलेपनानि चन्दनादीनि याभिस्ताः 'माल्यं पुष्पे तु पुष्पदाम्नि' इति वैजयन्ती ॥

**विपाण्डुरं कीटरजस्तृणान्वितं भुजंगवद्वक्रगति प्रसर्पितम् ।**
**ससाध्वसैर्भेककुलैर्निरीक्षितं प्रयाति निम्नाभिमुखं नवोदकम् ॥ १.१३ ॥**

विपाण्डुरमिति ॥ विपाण्डुरं पाण्डुरवर्णं कीटाश्च रजांसि च तृणानि च तैरन्वितं युक्तं भुजंगवत्सर्पवद्वक्रगति तिर्यग्गमनं प्रसर्पितमितस्ततः संचरणशीलं

---

1. L निःस्वनैः 2. B1 L A. ध्वनद्भिः, स्वनद्भिः 3. L कृत्वा 4. B[1] कृताः
5. B[1] L. विपाण्डवम् 6. G. A. भुजङ्गमाकारगति° 7. L. विलोकितम् ।

ससाध्वसैः सभयैर्भेककुलैर्मण्डूकसमुदायैः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः। निरीक्षितं विलोकितं नवोदकं नूतनजलं निम्नस्य गम्भीरस्य देशस्याभिमुखम्। 'निम्नं गभीरं गम्भीरम्' इत्यमरः। प्रयाति गच्छतीत्यर्थः ॥

[A] नवोदकं निम्नस्य नतप्रदेशस्याभिमुखं प्रयाति। किं०विपाण्डुरं श्वेतवर्णम्। पु० भुजंगमाकारा या गतिर्गमनं तया प्रसर्पितं प्रचलितम्। पु० ससाध्वसैर्भययुक्तैर्भेककुलैः भेकानां मण्डूकानां कुलानि समूहानि तैर्विलोकितं दृष्टम् ॥

**विपत्रपुष्पां¹ नलिनीं समुत्सुका² विहाय भृङ्गाः श्रुतिहारिनिस्वनाः³ ।**
**पतन्ति मूढाः शिखिनां प्रनृत्यतां⁴ कलापचक्रेषु नवोत्पलाशया ॥ १४ ॥**

विपत्रेति ॥ समुत्सुका उत्कण्ठिताः। श्रुतेः श्रवणस्य हारी मनआह्लादकर इति यावत्। निस्वनः शब्दो येषां ते तथोक्ता मूढा इदं न त्विदं तन्नलिनमिति विचाररहिता भृङ्गाः भ्रमराः 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः। विगतानि पत्राणि दलानि यस्य तादृशं पुष्पं यस्याः सा तां तथोक्तां नलिनीम्। विहाय त्यक्त्वा। प्रनृत्यतां नृत्यं कुर्वताम् शिखिनां मयूराणाम्। कलापचक्रेषु बर्हमण्डलेषु। नवोत्पलस्य नूतनकुवलयस्याशया। भ्रमेणेति भावः। पतन्ति निपतन्तीत्यर्थः ॥

[A] च पुनः भृङ्गाः भ्रमराः। शिखिनां मयूराणाम्। कलापचक्रेषु बर्हिमण्डलेषु। पतन्ति। कथं० म० नृत्यतां नृत्यं कुर्वताम्। किं कृत्वा नलिनीं कमलिनीम्। विहाय त्यक्त्वा। कया नवोत्पलाशया नवं च तदुत्पलं च नवोत्पलं तस्याशा नवोत्पलाशा तया। किं० नलिनीम्। विपन्नानि नष्टानि पुष्पाणि कुसुमानि यस्याः सा विपन्नपुष्पा तां विपन्नपुष्पाम्। किं० भृङ्गाः समुत्सुकाः उत्कण्ठायुक्ताः। पु० श्रुतिहारिनिस्वनाः श्रुत्योः कर्णयोर्हारी मनोहरो निस्वनो शब्दो येषां ते। पु० मूढा उद्विग्नचित्ताः। अत्र नृत्यन्मयूराणां कलापाः प्रत्यग्रपद्मवन्मनोरमा भवन्तीत्यर्थः ॥

**वनद्विपानां नववारिद⁵स्वनैर्मदान्वितानां ध्वनतां⁶ मुहुर्मुहुः ।**
**कपोलदेशा विमलोत्पलप्रभाः सभृङ्गयूथैर्मदवारिभिश्रिताः⁷ ॥१५॥**

वनद्विपानामिति ॥ नवाः सद्यःसंभृतसलिला ये वारिदा जलदास्तेषां स्वनैर्निनादैः। 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः। कृत्वा। मदान्वितानाम्। अन्यवारणगर्जनशङ्कयेति भावः। अत एव मुहुर्मुहुर्वारंवारं ध्वनतां गर्जताम्। वनद्विपानामारण्यगजानाम्। 'द्विपः मतंगजो गजो नागः' इत्यमरः। विमलानि निर्मलानि यान्युत्पलानि कुवलयानि तेषां प्रभेव प्रभा येषां ते तथोक्ताः। 'स्यादुत्पलं कुवलयम्' इत्यमरः। कपोलदेशा गण्डप्रदेशाः। सभृङ्गयूथैर्भ्रमरसमुदायसहितैर्मदवारिभिर्दानोदकैश्रिताः। व्याप्ता इत्यर्थः। सौगन्ध्यातिशयाद्भ्रमरैरप्यागत्य तत्र स्थितमिति भावः ॥

---

1. B B¹ C विपत्रपुष्णाम्, विपन्नपुष्णाम्, प्रफुल्लपत्राम्, A. विपन्नपुष्पाम् 2. L समुत्सुकाम् 3. G श्रुतिचारुनिस्वनाः 4. G च नृत्यताम् B¹ स्वनताम् 5. L. A •तोयद• 6. G स्वनताम् 7. G. A. श्रिताः

[A] वनद्विपानां काननहस्तिनाम् । कपोलदेशाः गल्लोपरिभागाः । नवतोयदस्वनैः नवाः प्रत्यग्राश्च तोयदा मेघाश्च नवतोयदाः तेषां स्वना गर्जितशब्दास्तथा तैः । कृत्वा मदवारिभिः मदा एव वारीणि जलानि तैः श्रिताः क्षरन्मदा जाता इत्यर्थः । किं० मदान्वितानां मदावस्थायुक्तानाम् । मुहुर्मुहुर्वारंवारं ध्वनतां बृंहताम् । शब्दं कुर्वतामित्यर्थः । कथं० कपो० विमलं च तदुत्पलं च विमलोत्पलं तद्वत्प्रभा कान्तिर्येषां ते । कथं० म० भृङ्गयूथैः सहितानि सभृङ्गयूथानि तैः भ्रमरनिकरसहितैः ॥

**सितोत्पलाभाम्बुदचुम्बितोपलाः समाचिताः प्रस्रवणैः समन्ततः ।**
**प्रवृत्तनृत्यैः शिखिभिः समाकुलाः समुत्सुकत्वं जनयन्ति भूधराः ॥१६॥**

सितेति ॥ सितानि शुभ्राणि यान्युत्पलानि कुवलयानि तेषामाभेवाभा कान्तिः सलिलवर्षणे येषां तादृशा येऽम्बुदा जलदास्तैश्चुम्बिता उत्पलाः पाषाणा येषां ते तथोक्ताः । 'पाषाणप्रस्तरग्रावोपलाश्मानः' इत्यमरः । समन्तत इतस्ततः । प्रस्रवणैर्निर्झरैः । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः । समाचिता व्याप्ताः । प्रवृत्तमारब्धं नृत्यं नर्तनं यैस्तथोक्तैः । 'लास्यं नृत्यं च नर्तने' इत्यमरः । शिखिभिर्मयूरैः । समाकुला व्याकुलाः । भूधराः समुत्सुकत्वम् । चित्तस्येति शेषः । जनयन्त्युत्पादयन्तीत्यर्थः ॥

[A] भूधराः पर्वताः प्रवासिनां पथिकजनानाम समुत्सुकस्य भावः समुत्सुकत्वं जनयन्त्युत्पादयन्ति । किं० भूधराः । अम्बुधरोक्षितोपलाः अम्बुधरैर्मेघैरुक्षिताः सिक्ता उपलाः पाषाणा येषां ते । पु० प्रस्रवणैः निर्झरैः । समन्ततः सर्वतः । व्याप्ताः समाचिताः । पु० प्रवृत्तनृत्यैः प्रवृत्तं प्रारब्धं नृत्यं नाटकं यैस्तैः । शिखिभिर्मयूरैः । समाकुला व्याप्ताः ॥

**कदम्बसर्जार्जुनकेतकीवनं विकम्पयंस्तत्कुसुमाधिवासितः ।**
**ससीकराम्भोधरसङ्गशीतलः समीरणः कं न करोति सोत्सुकम् ॥१७॥**

कदम्बेति ॥ कदम्बो नीपः, सर्जोऽश्वकर्णः, अर्जुनः ककुभः, केतक्यश्च तासां वनं समुदायम् । 'नीपप्रियककदम्बास्तु हरिप्रिये' इत्यमरः । 'साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्वरः' इत्यमरः । 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः । विकम्पयंस्तेषां पूर्वोक्तद्रुमाणां कुसुमैः पुष्पैरधिवासितः संजाताधिवासः । ससीकरो जलकणसहितो योऽम्भोधरो मेघस्तस्य सङ्गेन संसर्गेण शीतलः शीतः । समीरणो

---

1. B[1] सुभूषिता A. प्रवासिनामम्बुधरोक्षितोपलाः 2. G चुम्बितोत्पलाः 3. G सुभूषिताः 4. L प्रश्रवणैः 5. B[1] G अपङ्क्तिलैः 6. G प्रवृद्ध° 7. तु. रामायणम् ४, २८,३४ 8. B नीपकेतकीः 9. C प्रकम्पयन्, प्रकल्पयन् 10. G वासनः B[1] अधिवासनः

मारुतः। 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः। कं पुरुषं सोत्सुकं सोत्कण्ठं न करोति। अपि तु सर्वमेवेत्यर्थः॥

[A] समीरणो वायुः। कं मनुष्यं सोत्सुकं प्रियामिलनोत्कण्ठितं न करोति अपितु सर्वं जनं सोत्सुकं करोतीत्यर्थः। किं कुर्वन्। कदम्बश्च सर्जश्च अर्जुनश्च नीपश्च केतकी च कदम्बसर्जार्जुननीपकेतक्यस्ता विकम्पयन् विशेषेण धूनयन्। किं०समीरणः तत्कुसुमाधिवासितः तेषां पूर्वोक्तवृक्षाणां कुसुमैः पुष्पैरधिवासितः सुगन्धीकृतः। पु० कथम्भूतः समीरणः। शीकरैर्जलकणैः सह वर्त्तत इति सशीकरः, सशीकरो योऽसावम्भोधरो मेघस्तस्य सङ्गेन शीतलः॥

**शिरोरुहैः श्रोणितटावलम्बिभिः कृतावतंसैः कुसुमैः सुगन्धिभिः।**
**स्तनैः सहारैर्वदनैः ससीधुभिः स्त्रियो रतिं संजनयन्ति कामिनाम्॥ १८॥**

शिरोरुहैरिति॥ स्त्रियस्तरुण्यः श्रोणितटे कटिपश्चाद्भागेऽवलम्बन्ते तैस्तथोक्तैः शिरोरुहैश्चिकुरैः। 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः' इत्यमरः। कृतावतंसैः सुगन्धिभिः कुसुमैः पुष्पैः। 'पुष्पं प्रसूनं कुसुमम्' इत्यमरः। सहारैः कुसुममाला-सहितैः। स्तनैः कुचैः। ससीधुभिर्मधुसहितैः। वदनैराननैः। कामिनां विलासिनाम्। रतिं प्रीतिम्। संजनयन्ति सम्यक् प्रकारेणोत्पादयन्तीत्यर्थः॥

[A] स्त्रियः। कामिनां भोगिनाम्। रतिं प्रीतिम्। संजनयन्ति उत्पादयन्ति। कैः शिरोरुहैः। किं० श्रोणेस्तटं श्रोणितटं कटीप्रदेशः तत् अवलम्बन्ते ये ते श्रोणि-तटावलम्बिनस्तैः। शिरसि रोहन्त्युत्पद्यन्ते इति शिरोरुहास्तैः। किं० शि०। सुशोभनो गन्धो येषु तानि सुगन्धीनि तैः कुसुमैः कृत्वा। कृतोऽवतंसो येषु ते कृतावतंसास्तैः। पु० कैः सहारैः स्तनैः। हारैः मुक्ताहारैः सह वर्त्तन्ते सहारैः। ईदृशैः कुचैः। ससर्षपैः वदनैः सर्षपाकारप्रस्वेदबिन्दुसहितैर्मुखैः। अत्रैते कामिनां प्रीतिकरा भवन्तीत्यर्थः॥

**तडिल्लताशक्रधनुर्विभूषिताः पयोधरास्तोयभरावलम्बिनः।**
**स्त्रियश्च काञ्चीमणिकुण्डलोज्ज्वला हरन्ति चेतो युगपत्प्रवासिनाम्॥१९॥**

तडिल्लतेति॥ तडिल्लता लताकारा तडिच्छक्रधनुरिन्द्रायुधं च ताभ्यां विभूषिताः शोभिताः। 'इन्द्रायुधं शक्रधनुः' इत्यमरः। तोयभरेण जलभारेणावल-म्बिनो नम्राः। पयोधरा मेघाः। काञ्ची मेखला च मणिकुण्डलानि नानाविधरत्नख-चितताटङ्कानि च तैरुज्ज्वलाः सुन्दराः स्त्रियश्च। प्रवासिनां प्रोषितानाम्। चेतोऽन्तः-करणम्। युगपत्सममेव हरन्त्यपहरन्तीत्यर्थः। स्त्रियश्चात्र परकीयाः। प्रवासिनां स्वकीयासांनिध्याभावात्॥

1. B G सुपीनैः 2. G A. ससर्पपैः सशीधुभिः 3. B1 L तडिल्लताः तडिद्गुणाः A तडिद्गुणाः 4. L स्व 5. K मेखलोज्ज्वलाः L कुन्दलोज्ज्वलाः।

[A] एते, युगपत्समकालम् । प्रवासिनां पान्थानाम् । चेतो हरन्ति वशीकुर्वन्ति । एते के । शक्रस्येन्द्रस्य धनुः कोदण्डं तेन विभूषिताः शोभिताः नम्राः पयोधराः मेघाः च पुनः काञ्चीमणिकुण्डलोज्ज्वलाः स्त्रियश्च । काञ्च्यः कटिमेखलाः । मण्युपलक्षितानि कुण्डलानि तैरुज्ज्वलाः शोभमानाः । स्त्रियः कामिन्यः । एतानि वस्तूनि युगपत्प्रवासिनां चेतोहारीणि भवन्तीत्यर्थः । वंशस्थवृत्तानि ॥

**मालाः कदम्बनवकेसरकेतकीभिरायोजिताः शिरसि बिभ्रति योषितोऽद्य ।**
**कर्णान्तरेषु ककुभद्रुममञ्जरीभिरिच्छानुकूलरचितानवतंसकांश्च ॥ २० ॥**

माला इति ॥ योषितः स्त्रियोऽद्य कदम्बानि कदम्बकुसुमानि, नवकेसराणि नूतनबकुलकुसुमानि, केतक्यश्च ताभिरायोजिता ग्रथिताः । 'अथ केसरे । बकुलः' इत्यमरः । मालाः स्रजः । शिरसि मूर्धनि । ककुभद्रुमोऽर्जुनवृक्षस्तस्य मञ्जरीभिः कलिकाभिरिच्छयानुकूलं यथा भवति तथा रचितान्कृतानवतंसा एवावतंसकास्तान्कर्णान्तरेषु कर्णोपरिभागेषु बिभ्रति दधतीत्यर्थः । वसन्ततिलकावृत्तमेतत् । तदुक्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥

[A] वर्षाकाले योषितो नार्यः शिरसि माला बिभ्रति धारयन्ति । च पुनः कर्णान्तरेषु कर्णमध्येषु अवतंसकान् कर्णपूरान बिभ्रति । कथं० मालाः, कदम्बनवकेसरकेतकीभिः आयोजिताः कदम्बाश्च नवकेसराश्च नवशोकाश्च केतक्यश्च कदम्बनवकेसरकेतक्यस्ताभिः आयोजिताः । रचिताः अर्थात्कदम्बानां पुष्पैर्ग्रथिताः । कथं०अवतंसकान् । ककुभद्रुमाणामर्जुनवृक्षाणां मञ्जर्यः ककुभद्रुममञ्जर्यः । ताभिः पूतान्पवित्रान् । पु० क० दूकूलेन पट्टकूलेन रचिताश्चान । अत्र नार्यः शोभानिमित्तम् एतानि वस्तूनि कुर्वन्तीत्यर्थः ॥

**कालागुरुप्रचुरचन्दनचर्चिताङ्ग्यः पुष्पावतंससुरभीकृतकेशपाशाः ।**
**श्रुत्वा ध्वनिं जलमुचां त्वरितं प्रदोषे शय्यागृहं गुरुगृहात्प्रविशन्ति नार्यः ॥२१॥**

कालागुर्विति ॥ कालागुरुः कृष्णागुरुः स प्रचुरो बहुलो यस्मिंस्तादृशं यच्चन्दनं तेन चर्चितं लिप्तमङ्गं शरीरं यासां तास्तथोक्ताः । पुष्पावतंसेन कुसुमकर्णपूरेण सुरभीकृतः सुगन्धीकृतः केशपाशः कुन्तलसमूहो यासां तास्तथोक्ता नार्यः स्त्रियः । जलमुचां घनानाम् । ध्वनिं गर्जनम् । श्रुत्वाकर्ण्य । त्वरितं शीघ्रम् । प्रदोषे रजनीमुखे । गुरुगृहाच्छ्वसुरगृहं परित्यज्य । शय्यागृहं प्रविशन्तीत्यर्थः ॥

[A] नार्यः प्रदोषे सन्ध्यायां । जलमुचां मेघानाम । ध्वनितं गर्जितम् । श्रुत्वा त्वरितं सत्वरं गुरुगृहात् गुरोः श्वसुरस्य गृहं गुरुगृहं तस्माच्छय्याया गृहं प्रविशन्ति । भर्त्रा सह क्रीडां कर्तुं प्रविशन्तीत्यर्थः । किं० नार्यः कालागुरुणा कृष्णागुरुणा प्रचुरेण सर्वोत्कृष्टेन चन्दनेन चर्चितं विलेपितं संस्कृतमङ्गं यासां ताः । पु० नार्यः ।

---

1. G माला 2. L. केतकीनाम् 3. G च 4. G°णाम् A °भिः 5 K L श्रोत्रानुकूल, नेत्रानुकूल—सूनानुकूल, A. पूतान्दुकूल° 6. B[1] चर्चिताङ्गाः

पुष्पमयैरवतंसैः कुसुमरचितशिरोमालाभिः सुरभीकृताः केशपाशाः वेणीदण्डा यासां ताः । वसन्ततिलकावृत्तद्वयी । 'उक्ता वसन्ततिलका तभजा जगौ गः' ॥

**कुवलयदल[1]नीलैरुन्नतैस्[2]तोयनम्रैर्मृदुपवनविधू[3]तैर्मन्दमन्दं चलद्भिः ।**
**अपहृतमिव चेतस्तोयदैः सेन्द्रचापैः पथिकजनवधूनां [4]तद्वियोगाकुलानाम् ॥२२॥**

कुवलयेति ॥ कुवलयस्य नीलोत्पलस्य दलं पत्रमिव नीलैः श्यामवर्णैरुन्नतैरुच्चस्थैस्तोयनम्रैर्जलनम्रैर्मृदुना लघुना पवनेन वानेन विधूताः कम्पितास्तैरत एव मन्दमन्दमतिमन्थरं चलद्भिर्गच्छद्भिः सेन्द्रचापैरिन्द्रधनुषा सहितैस्तोयदैर्मेघैस्तेषां पान्थजनानां वियोगेन विरहेणाकुला व्याकुलास्तासां पथिकजनवधूनां विरहिणीनां चेतोऽन्तःकरणमपहृतमिव हृत्वा नीतमिवेत्युत्प्रेक्षा । मालिनीवृत्तमेतत् । लक्षणं तूक्तम् ॥

[A] तोयदैर्मेघैः । पथिकजनवधूनां पथिकजनानां वध्वस्तासां चेतोऽपहृतं मुषितमिव जातम् । कि० तो० कुवलयदलवत् कुमुदपत्रवन्नीलाः श्यामाः कुवलयदलनीलास्तैः । नीलश्यामयोरैक्यम् । पु० उन्नतैः उन्नमितैः । पु० तोयेन जलेन नम्रास्तैः । पु० मृदुपवनविशेषान्मन्दमन्दं चलद्भिः मृदुः स्वल्पो योऽसौ पवनो वायुस्तस्मात् मन्दं मन्दं चलद्भिः चलमानैः । पु० सेन्द्रचापैः इन्द्रचापेनेन्द्रधनुषा सह वर्त्तन्त इति सेन्द्रचापास्तैः । किं० पथि० तद्वियोगक्षतानां तेषां पथिकजनानां वियोगरसेन क्षताः पीडितास्तासाम् ॥

**मुदित इव कदम्बैर्जात[5]पुष्पैः समन्तात्पवनचलितशाखैः शाखिभिर्नृत्यतीव ।**
**हसितमिव विधत्ते सूचि[6]भिः केतकीनां नवसलिलनिषेकै[7]श्छिन्नतापो वनान्तः॥२३॥**

मुदित इति ॥ नवस्य नूतनस्य सलिलस्य निषेकेण सेवनेन छिन्न उच्छिन्नस्तापो यस्य स तथोक्तो वनान्तोऽरण्यप्रान्तो जातपुष्पैः प्रादुर्भूतकुसुमैः । कदम्बैर्नीपवृक्षैर्मुदित इव । समन्तादितस्ततः । पवनेन वायुना चलिताः कम्पिताः शाखा यैस्तथोक्तैः शाखिभिर्वृक्षैः । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः । नृत्यतीव नृत्यं करोतीवेत्युत्प्रेक्षा । एवमन्यत्रापि । केतकीनां सूचिभिः कण्टकैर्हसितमिव हास्यमिव विधत्ते । विदधातीत्यर्थः ॥

[A] वनस्यान्तो वनान्तः । शाखिभिर्वृक्षैर्नृत्यतीव नृत्यं करोतीव । किं० पवनेन वायुना चलिताः कम्पिताः शाखा येषां तैः । किं० वनान्तः समन्तात्समस्तप्रकारेण । जातपुष्पैः जातान्युत्पन्नानि पुष्पाणि येषु ते जातपुष्पास्तैः ।

---

1. G दललीलैः 2. B[1] G स्तोकनम्रैः 3 G °विशेषात्
4. B[1] K L A तद्वियोगक्षतानाम् 5. G जाति° 6. G सूतिभिः 7. B[1] K L °निषेकाच्छान्ततापः A °निषकोत्खाततापः ।

कदम्बैः कदम्बवृक्षैर्मुदित इव । उत्प्रेक्षते उत्पन्नहर्ष इव । यथा हर्षितः पुमान् रोमाञ्चयुक्तो भवति तथाऽत्र विकसितपुष्पाः कदम्बवृक्षा रोमाञ्चसदृशा ज्ञेयाः । पु० केतकीनां सूचिभिः कुसुमैः हास्यं विधत्त इव। उत्प्रेक्षते हास्यं करोतीव । केतकीनां पुष्पाणि धवलानि भवन्ति हास्यमपि धवलं वर्ण्यते । अतः साम्यं । किं० व० नवसलिलनिषेकोत्खाततापः नवं च तत् सलिलं च नवसलिलं अर्थान्मेघवर्षण-जलं तस्य निषेकः सिञ्चनं तेनोत्खात उन्मूलितो दूरीकृतस्तापो यस्य सः ॥

**शिरसि बकुलमालां मालतीभिः समेतां विकसितनवपुष्पैर्यूथिकाकुड्मलैश्च ।**
**विकचनवकदम्बैः कर्णपूरं वधूनां रचयति जलदौघः कान्तवत्काल एषः ॥२४॥**

शिरसीति ॥ जलदानां मेघानामोघः संघातो यस्मिन्स तथोक्तः । 'स्तोमौघ-निकरव्रातवारसंघातसंचयाः' इत्यमरः । एष कालो वर्षाकालः । कान्तवत्प्रियवद्वधूनां स्त्रीणाम् । शिरसि मूर्धनि । मालतीभिर्मालतीकुसुमैः । समेतां युक्ताम् । बकुलमालां केसरस्रजम् । रचयति करोति । तथा विकसितनवपुष्पैः संफुल्लनूतनकुसुमैर्यूथिकाया मागधीलतायाः कुड्मलानि मुकुलानि तैः । 'अथ मागधी । गणिका यूथिकाम्बष्ठा' इत्यमरः । 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । विकचानि विकसितानि नवानि नूतनानि यानि कदम्बानि कदम्बकुसुमानि तैश्च कर्णपूरं कर्णावतंसं रचयति करोतीत्यर्थः॥

[A] एष समीपवर्त्ती वर्षाऋतुसम्बन्धी कालो वधूनां कर्णपूरं कर्णा-भरणम् । रचयति नवीनमुत्पादयति । कैः विकचा विकासमाप्ता ये नवकदम्बा नूतन-कदम्बवृक्षा विकचनवकदम्बास्तैः । नवशब्देन सुन्दरता सूचिता । च पुनर्वधूनां शिरसि शिरोनिमित्तं बकुलानामशोकवृक्षपुष्पाणां माला बकुलमाला तां करोति निष्पादयति । किं० बकुलमालाम् । मालतीभिर्मालिनीपुष्पैः । समेतां संयुक्ताम् । पु० कुसुमितानि विकसितानि यानि वनपुष्पाणि तैः । यूथिकायाः कुड्मलानि कलिकास्तैः समेतां मिश्रिताम् । 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । किं० कालः जलदस्य मेघस्यौघः समूहो विद्यतेऽस्मिन्निति जलदौघः । किं० तत कान्तवत् । भर्तृवत् । यथा कान्तः कामिनीनां कर्णपूरं मालां च रचयति ॥

**दधति वरकुचाग्रैरुन्नतैर्हारयष्टिं प्रतनुसितदुकूलान्यायतैः श्रोणिबिम्बैः ।**
**नवजलकणसेकादुद्गतां रोमराजीं ललितवलिविभङ्गैर्मध्यदेशैश्च नार्यः ॥२५॥**

दधतीति ॥ नार्यः स्त्रिय उन्नतैरूर्ध्वमुखैर्वरा उत्तमाः । पीना वर्तुलाश्चेति यावत् । ये कुचाः स्तनास्तेषामग्रैरग्रभागैर्हारयष्टिं मुक्ताहारमायतैर्दीर्घैः श्रोणिबिम्बैः कटिपश्चाद्भागैः प्रतनूनि सूक्ष्माणि सितानि श्वेतवर्णानि यानि दुकूलानि वस्त्राणि

1. B C[1] L कुसुमितनवपुष्पैः, A कुसुमितवनपुष्पैः 2. C[1] L कुचयुगाग्रैः B पृथुकुचाग्रैः A कुचसमुद्रैः 3. G रुचिरतर° 4. G °लव° 5. L उन्नताम् 6. G °राजिम् 7. L त्रिवलिवलितशोभाम् 8. G देशे तु C देशे च ।

तानि। ललितानां सुन्दराणां वलीनां त्रिवलीनां विभङ्गा येषु तैस्तथोक्तैर्मध्यदेशैर्नवानां जलकणानां सेकादुद्गतामुत्पन्नां रोमराजीं रोमाञ्चपङ्क्तिं दधतीत्यर्थः ॥

[A] नार्यः उन्नतैः कुचसमुद्गैः कुचाः स्तना एव समुद्गाः सम्पुटाः कुचसमुद्गास्तैर्हारयष्टिं मुक्ताहारम् । दधति धारयन्ति । पुनरायतैः विस्तीर्णैः । श्रोणिबिम्बैः कटिप्रदेशैः । रुचिरतरदुकूलानि दधति धारयन्ति । अतिशयेन रुचिराणि रुचिरतराणि । ईदृशानि यानि दुकूलानि क्षौमाणि तानि । च पुनर्मध्यदेशैः तनुमध्यप्रदेशैः । रोमराजिं दधति । रोम्णां राजिः श्रेणिः रोमराजिस्ताम् । किं० मध्यदेशैः तिसृभिर्वलिभिर्ललिता मनोहरा शोभा येषां तैः । किं० नवजललवसेकादुद्गतां नवाः प्रत्यग्रा ये जललवास्तेषां सेकः सिञ्चनं तस्मादुत्पन्नाम् । एतैर्नार्यो विशेषतो मनोहारिण्यो भवन्तीत्यर्थः ॥

**नवजलकणसङ्गाच्छीततामादधानः[1] कुसुमभरनतानां लासकः[2] पादपानाम् ।**
**जनितरुचिरगन्धः[3] केतकीनां रजोभिः परिहरति[4] नभस्वान्प्रोषितानां[5] मनांसि ॥२८**

नवेति ॥ नवानां नूतनानां जलकणानां सङ्गात्संबन्धाच्छीततां शैत्यमादधानो गृह्णन् कुसुमानां पुष्पाणां भरेण नता नम्रास्तेषां तथोक्तानां पादपानां वृक्षानां लासकः संसर्गवान् । एतेन मान्द्यमुक्तम् । केतकीनां रजोभिः परागैः । 'परागः सुमनोरजः' इत्यमरः । जनित उत्पादितो रुचिरः सुन्दरो गन्धो यस्मिंस्तथोक्तो नभस्वान्वायुः प्रोषितानां पान्थजनानां मनांस्यन्तःकरणानि परिहरतीत्यर्थः ॥

[A] नभस्वान्वायुः । प्रोषितानां पथिकजनानाम् । मनांस्यपहरति वशीकरोति । कथं न० किं कुर्वाणः नवा ये जलकणा नवजलकणास्तेषां सङ्गो मिलनं तस्मात् शीतस्य भावः शीतता ताम् आदधानः । पु० कुसुमानां पुष्पाणां भरेण नता नम्रीभूतास्तेषां पादपानां वृक्षाणां लासकः नृत्यकारकः । पु० केतकीनां पुष्पाणां रजोभिः परागैः (जनित उत्पादितो रुचिरो) मनोहरो गन्धो यस्य सः ॥

**जलधरविनतानामाश्रयोऽस्माकमुच्चैरयमिति[6] जलसेकैस्तोयदास्तोयनम्राः ।**
**अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ॥२७**

जलधरेति ॥ तोयनम्रा जलभारनतास्तोयदा मेघाः । जलधरेण विनतानां नम्राणामस्माकमुच्चैरुन्नतोऽयं विन्ध्याचल आश्रय आधारः । भवतीति शेषः । इतीति हेतोः अतिशयमत्यन्तं परुषाः कठिनास्ताभिस्तथोक्ताभिर्ग्रीष्मवह्नेः शिखाभिः सम्यगुपजनित उत्पादितस्तापः संतापो यस्य तं तथोक्तं विन्ध्यं विन्ध्याद्रिं जलसेकैर्जलवर्षणैर्ह्लादयन्ति हर्षं प्रापयन्तीवेत्युत्प्रेक्षा । उपकृतो हि विपन्नं परमुपकरोतीति भावः ॥

[A] तोयदा मेघा इति कारणाज्जलानां सेका जलसेकास्तैः जलसिञ्चनैर्विंध्यं विन्ध्याचलं ह्लादयन्तीव हर्षमुत्पादयन्तीव। इतीति किमस्माकमयं प्रत्यक्षवर्त्ती

---

1. B¹G °सेकात् 2. B¹G नाशकः, नायकः 3. B¹K सुरभि° 4. CL अपहरति, व्यवहराति 5. B¹G योषितानाम् 6. B¹ G A. जलभरनमितानाम् ।

विन्ध्याचलो विन्ध्यनामा पर्वतः उच्चैरतिशयेनोन्नतो वाश्रयः स्थानम्। कथं०अस्माकम्। जलभरेण नमितास्तेषाम्। किं० तोयदास्तोयेन नम्राः। किं० ग्रीष्मस्योष्णकालस्य वन्हिदांग्निस्तथा तस्य शिखाभिर्ज्वालाभिः। समुपजनितः समुत्पादितस्तापो यस्य स तम्। किं० शि० अतिशयेन परुषाः कठोराः असह्यास्ताभिः॥

**बहुगुणरमणीयः कामिनीचित्तहारी तरुविटपलतानां बान्धवो निर्विकारः।**
**जलदसमय एषं प्राणिनां प्राणभूतो दिशतु तव हितानि प्रायशो वाञ्छितानि॥२८॥**

बहुगुणेति॥ बहुगुणैं रमणीयः सुन्दरः। कामिनीनामङ्गनानां चित्तहारी। मनोऽनुरञ्जक इति यावत्। तरुविटपा वृक्षशाखा लता वल्लयश्च तासाम्। क्वचित्पुस्तके 'नतविटपिलतानाम्' इति पाठः। तदर्थस्तु—नता नम्रा ये विटपिनः शाखिनो लताश्च तासामिति। 'वल्ली तु व्रततिर्लता' इत्यमरः। बान्धवो बन्धुः। निर्विकारो विकारशून्यः। प्राणिनां जन्तूनाम्। 'प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः' इत्यमरः। प्राणभूतो जीवभूत एष जलदसमयो वर्षाकालस्तव प्रायशो वाञ्छितान्यभिलषितानि हितानीष्टानि दिशतु। ददात्वित्यर्थः॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कवि-
श्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये प्रावृड्वर्णन नाम द्वितीयः सर्गः।

[A] कविर्भोजराजं ब्रूते। हे राजन्नेषः जलदसमयः वर्षाकालस्तव हितानि हितकारीणि धनपुत्रराज्यसौख्यादीनि वाञ्छितान्यचिरेण दिशतु। बहुभिर्गुणैः रम्यो रमणीयः। पु० कामयन्त्यभिलषन्ति स्त्रीसङ्गममिति कामिनस्तेषां भोगिपुरुषाणाम्। चित्तं हरतीति वश्यं करोतीति चित्तहारी। पु० तताः विस्तृता विटपाः शाखा यासां तास्ततविटपा एवंविधा या लतास्ततविटपलतास्तासां निर्विकारो विकाररहितो बान्धवो मित्रम्। पु० प्राणिनां जीवानां प्राणभूतः। प्राणसदृशः। मालिनीवृत्तानीमानि सप्तसंख्याकानि॥

सूरीन्द्रवर्यामरकीर्त्तिसूरिविनिर्मितायामृतुवर्णनस्य।
काव्यस्य वृत्तौ समजीजनद्वै द्वैतीयिकिः सर्गवरो वरेण्यः॥

इति श्रीअमरकीर्त्तिसूरिकृतायां श्रीकालिदासकृतविशदकाव्यटीकायां
प्रावृड्-वर्णनो नाम द्वितीयः सर्ग.

---

1. G A इति बहुगुणरम्यः 2. B[1] G. L योषिताम् A कामिनाम् 3. A तत°
4. G एषाम् 5. G प्राणिनः 6 K B[1] प्राणहेतुः

अथ क्रमप्राप्तं शरत्कालं वर्णयति—

**काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या ।**
**आपक्वशालिरुचिरा तनुगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या ॥ १ ॥**

काशांशुकेति ॥ काशमेव काशकुसुममेवांशुकं वस्त्रं यस्याः सा तथोक्ता । पक्षे काशमिवांशुकं वस्त्रं यस्याः सेति । विकचं विकसितं यत्पद्मं तदेव मनोज्ञं सुन्दरं वक्त्रं मुखं यस्याः सा तथोक्ता । पक्षे विकचं विकसितं यत्पद्मं तदिव मनोज्ञं सुन्दरं वक्त्रं मुखं यस्याः सेति । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः । फुल्लश्चैते विकसिते' इत्यमरः । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । सोन्मादानामुन्मादसहितानां हंसानां रवः शब्द एव नूपुरनादो मञ्जीरध्वनिस्तेन रम्या रमणीया । पक्षे सोन्मादहंसरव इव नूपुरनादस्तेन रम्या । 'शब्दे निनाद-निनदध्वनिध्वानरवस्वनाः' इत्यमरः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । आ समन्तात्पक्वा परिणता शालिरेव रुचिरा सुन्दरी तन्वी गात्रयष्टिः शरीरलता यस्याः । पक्षे आपक्वशालिरिव रुचिरा तनुगात्रयष्टिर्वपुःसंहननं यस्याः । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । रूपरम्या शरन्नववधूरिव प्राप्तागतेत्यर्थः । वसन्ततिलकावृत्तम् ॥

[A] अथ शरदृतुं वर्णयन्नाह—(शरद् )ऋतुः प्राप्ता समागता। केव नववधूरिव नवा चासौ वधूश्च नववधूः । इवोपमायाम् । यथा नववधूः शृङ्गारं विधाय प्रियं प्राप्नोति । तथा शरद् (ऋतुः) राजानं प्राप्ता । किंभूता शरद्वधूश्च । काशा एवांशुकानि वस्त्राणि यस्याः सा । वधूपक्षे काशवच्छुभ्राण्यंशुकानि यस्याः सा । पु० विकचं विकस्वरं यत् पद्मं तदेव मनोज्ञं वक्त्रं मुखं यस्याः सा । जातावेकवचनम् । वधूपक्षे विकचपद्मवन्मनोज्ञं वक्त्रं यस्याः सा । पु० सोन्मादहंस० सोन्मादा उन्मादयुक्ता ये हंसास्तेषां रुतमेव शब्द एव नूपुरनादः नूपुरशब्दस्तेन रम्या रमणीया । वधूपक्षे सोन्मादा ये हंसास्तेषां रुतवन्नूपुरनादास्तेन रम्या रमणीया । पु० आ ईषत्पक्वा ये शालयः तै रुचिराचासौ तन्वी च गात्रयष्टिः शरीरं यस्याः सा । दिनानामल्पीयस्त्वात् । अथवा अपक्वा ये शालयस्त एव रुचिरा मनोज्ञा तन्वी कृशा च गात्रयष्टिः शरीरं यस्याः सा । वधूपक्षे आ ईषत् पक्वा ये शालयः तद्वद्रुचिरा मनोज्ञा गौरवर्णत्वात् । तन्वी कृशा च गात्रयष्टिर्यस्याः सा । पु० किं० हारि मनोहरं रूपं यस्याः सा ॥

**काशैर्मही शिशिरदीधितिना रजन्यो हंसैर्जलानि सरितां कुमुदैः सरांसि ।**
**सप्तच्छदैः कुसुमभारनतैर्वनान्ताः शुक्लीकृतान्युपवनानि च मालतीभिः ॥ २ ॥**

काशैरिति ॥ काशैः काशपुष्पैर्मही पृथ्वी । शिशिरदीधितिना चन्द्रेण

1. तुलनीयं रामायणीयम् ( ४,३० ) उपजीव्यत्वेन शरद्वर्णनम् । 2. L रुत
3. LK °ललिता 4. G नत° 5. L रम्यरूपा, हारिरूपा तु० रामा. ४, ३०, २८
6. पुष्पातिभारावनताग्रशाखैः तु. रामा. ४, ३०,३४

रजन्यो रात्रयः। हंसैः सरितां नदीनां जलानि। कुमुदैः कैरवैः। 'सिते कुमुदकैरवे' इत्यमरः। सरांसि कासाराः। 'कासारः सरसी सरः' इत्यमरः। कुसुमभारेण पुष्पभारेण नता नम्रास्तैस्तथोक्तैः सप्तच्छदैः सप्तपर्णैर्वृक्षविशेषैः वनान्ता अरण्यप्रान्ताः। मालतीभिर्जातीभिश्च। 'सुमना मालती जातिः' इत्यमरः। उपवनान्यारामाः। 'आरामः स्यादुपवनं कृत्रिमं वनमेव यत्' इत्यमरः। शुक्लीकृतानीति लिङ्गवचनविपरिणामेनान्वयः॥

[A] एतैर्वस्तुभिरेतानि शुक्लीकृतानि, अशुक्लानि शुक्लानि कृतानि शुक्लीकृतानि, कैः। काशैः मही पृथ्वी शुक्लीकृता। पुनः शिशिरदीधितिना शिशिराः शीतलाः दीधितयो ज्योत्स्ना यस्य सः। तथा तेन चन्द्रेण रजन्यो रात्रयो धवलीकृताः। पुनः राजहंसैः जलानि धवलीकृतानि। पुनः कुमुदैः रात्रिविकासिसिताम्भोजैः परितश्चतुर्दिक्षु सरांसि तडागानि शुक्लीकृतानि। पुनः कुसुमभारनतैः पुष्पसमूहनम्रैः सप्तच्छदैः सप्तपर्णवृक्षैः वनान्ताः वनानाम् आरामाणामन्ताः प्रान्तप्रदेशाः शुक्लीकृताः। पुनर्मालिर्तीभिर्मालितीपुष्पैः। उपवनानि नगरपार्श्वकाननानि शुक्लीकृतानि। प्रायः शरदृतावेतैर्वस्तुभिरेतानि शोभायुक्तानि भवन्तीत्यर्थः॥

**चञ्चन्मनोज्ञशफरीरसनाकलापाः पर्यन्तसंस्थितसिताण्डजपङ्क्तिहाराः।**
**नद्यो विशालपुलिनान्तनितम्बबिम्बा मन्दं प्रयान्ति समदाः प्रमदा इवाद्य॥३॥**

चञ्चदिति॥ चञ्चती चञ्चला मनोज्ञा सुन्दरा शफर्येव प्रोष्ठ्येव रसनाकलापः काञ्चीगुणो यासां तास्तथोक्ताः। पक्षे चञ्चन्मनोज्ञशफरीव रसनाकलापो यासां ताः। 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः। पर्यन्ते प्रान्तभागे संस्थितोपविष्टा या सिताण्डजानां धवलमरालादीनां पङ्क्तिः श्रेणी सैव हारो यासां तास्तथोक्ताः। 'पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यमरः। पक्षे पर्यन्तसंस्थितसिताण्डजपङ्क्तिरिव हारो यासां ताः। विशालो विस्तीर्णो यः पुलिनान्तस्तीरप्रान्तः स एव नितम्बबिम्बं कटिपश्चाद्भागो यासां तास्तथोक्ता नद्यः सरितः। 'अथ नदी सरित्' इत्यमरः। समदा यौवनमदगर्विताः प्रमदाः स्त्रिय इव मन्दं मन्थरं यथा भवति तथाऽद्य प्रयान्ति। गच्छन्तीत्यर्थः॥

**[A]** नद्यः सरितोऽद्य शरदृतौ मन्दं प्रयान्ति मन्दं मन्दं गच्छन्तीत्यर्थः। का इव। समदा मदयुक्ताः प्रमदाः स्त्रिय इव। यथा समदाः प्रमदा मन्दं प्रयान्ति तद्वत्। किं० नद्यः चञ्चत् इतस्ततो धावन्त्यो मनोज्ञा याः सफर्यो मत्स्यास्ता एव रसनाकलापः कटिमेखलासमूहो यासां ताः। प्रमदा अपि रसनाकलापयुक्ता भवन्ति। पु० पर्य्यन्ते समीपे संस्थिता सिताण्डजानां हंसानां पङ्क्तिः सैव हारो यासां ताः। प्रमदा अपि परिधृतहारा भवन्ति। पु० न०। विशाला विस्तीर्णा ये पुलिनान्तास्तटप्रदेशास्तटान्ता वा, त एव नितम्बबिम्बानि कटीपश्चाद्भागा यासां ताः। प्रमदानामपि

1. G बल्ग° 2. G °भक्ति° 3. G °पुलिनोरु° 4. G °देशाः।

विस्तीर्णानि नितम्बबिम्बानि भवन्ति । अतः शरदि नदीनां प्रमदानां च सादृश्यमुक्तम् ॥

**व्योम क्वचिद्रजतशङ्खमृणालगौरैस्त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः ।**
**संलक्ष्यते पवनवेगचलैः पयोदै राजेव चामरवरैरुपवीज्यमानः ॥ ४ ॥**

व्योमेति ॥ त्यक्तं निवृत्तमम्बु यैस्तथोक्तैरत एव रजतं च शङ्खश्च मृणालं च रजतशङ्खमृणालानि तानीव गौरा गौरवर्णास्तैस्तथोक्तैः । लघुतया शतशः प्रयातैः । पवनस्य वायोर्वेगेन चलाश्चञ्चलास्तैस्तथोक्तैः पयोदैः । व्योमाकाशं क्वचित्कुत्रचिद्भागेन चामरवरैश्चामरश्रेष्ठैरुपवीज्यमानो राजेव । संलक्ष्यते दृश्यत इत्यर्थः ॥

[A] क्वचित् कस्मिंश्चित् स्थाने । व्योम आकाशम् । पयोदैर्मेघैः कृत्वा । राजा इव संलक्ष्यते । किं० पयोदैः रजतं च शङ्खश्च मृणालं पद्मनालं च रजतशङ्खमृणालानि तद्वद्गौराः शुभ्राः तथा तैः । पु० किं० पीतमम्बुभिः पीताम्बु येषां ते तैः । वीताम्बुभिरित्यपि पाठः । तत्र वीतं सर्वथा गतमम्बु येषां ते वीताम्बवस्तैः । पु० लघुतया ह्रस्वतया । शतशः शतधा सर्वदिक्षु वा । प्रयातैः प्रसृतैः । पु० पवनवेगचलैः पवनवेगेन वायुवेगेन चलाश्चपलास्तैः, अथ पवनवेगवच्चलाश्चलमानाः पवनवेगेन चलास्तैः । किं० राजा चामराणि वालव्यजनानि धरन्तीति चामरधरास्तैः । पुरुषैरभिवीज्यमानः । यथा चामरधरैर्वीज्यमानो राजा शोभते तथा मेघैः व्योम शोभते । चामराण्यपि सितानि भवन्ति सर्वदिक्षु प्रसरणशीलानि पवनवेगवच्चलानि च भवन्तीत्यर्थः ॥

**भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं बन्धूकपुष्परचिताऽरुणता च भूमिः ।**
**वप्राश्च चारुकमलावृतभूमिभागाः प्रोत्कण्ठयन्ति न मनो भुवि कस्य यूनः ॥५॥**

भिन्नेति ॥ भिन्नो विभिन्नो योऽञ्जनप्रचयः कज्जलसमूहस्तद्वत्कान्तिर्यस्य तत्तथोक्तं मनोज्ञं सुन्दरं नभ आकाशम् । बन्धूकानां जीवबन्धूकानां पुष्पैः कुसुमैः रचिता कृतारुणता यस्याः सा तथोक्ता । 'बन्धूको बन्धुजीवकः' इत्यमरः । भूमिश्च । चारूणि सुन्दराणि यानि कमलानि तैरावृता आच्छादिता भूमिभागा येषां ते तथोक्ता वप्राः प्राकाराश्च । 'स्याच्चयो वप्रमस्त्रियाम् । प्राकारो वरणः शालः' इत्यमरः । भुवि कस्य यूनो मनो न प्रोत्कण्ठयन्ति प्रोत्कर्षेण नोत्कण्ठयन्ति । अपि तु सर्वस्यापीति विभक्तिविपरिणामेनान्वयः ॥

[A] नभ आकाशं पुनर्भूमिश्च पुनर्वप्राः केदाराः कस्य यूनस्तरुणस्य मनो । भुवि पृथिव्याम् । नोत्कण्ठयन्ति उत्सुकं न कुर्वन्ति । अपि तु सर्वेषां मन उत्कण्ठयन्ति । कथं० नभः भिन्नं यदञ्जनं तस्य प्रचयः समूहस्तद्वत् कान्तिः श्यामलत्वं यस्य

---

**1.** G वीता°, मुक्ताव° **2.** L उत्प्रेक्ष्यते, उत्प्रेक्षते **3.** G चामरशतैः **4.** L °रभिवीज्यमानः, °रपि वीज्यमानः । **5.** तु. रामा. ( ४, २७, १३ ; १४ ) भिन्नाञ्जनप्रचयकान्ति, °चयाकारमम्भोधरमिवोत्थितम् । **6.** L °रजसारुणिता, °निकरै रुचिरा **7.** G पक्वकलमा° A पक्वकलमान्वित° **8.** L उत्कण्ठयन्ति ।

तत। पु० न०। मनोज्ञं सुन्दरम्। किं० भूमिः बन्धूकपुष्पस्य निकराः समूहास्तै रुचिराऽभिरामा। किं० वप्राः पक्ककलमाचितभूमिभागैः रुचिरा इति शेषः। पक्का ये कलमाः शालयः तैराचिता। व्याप्ता ये भूमिभागाः भूप्रदेशास्तैः। वप्राः क्षेत्राणि मन उत्कण्ठयन्तीत्यन्वयः। 'क्षेत्रे तु वप्रकेदारे' इत्यभिधानचिन्तामणौ॥ 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिः॥

**मन्दानिलाकुलितचारुतराग्रशाखः पुष्पोद्गमप्रचयकोमलपल्लवाग्रः।**
**मत्तद्विरेफपरिपीतमधुप्रसेकश्चित्तं विदारयति कस्य न कोविदारः॥ ६॥**

मन्देति॥ मन्देन मन्थरेणानिलेन पवनेनाकुलिताश्चारुतरा अतिसुन्दरा अग्रशाखा यस्य तथोक्तः। पुष्पोद्गमस्य कुसुमप्रादुर्भावस्य प्रचयेनाधिक्येन कोमलानि मृदूनि पल्लवाग्राणि यस्य स तथोक्तः। मत्तद्विरेफैरुन्मत्तभ्रमरैः परिपीतो मधुप्रसेको मकरन्दप्रस्रवो यस्य स तथोक्तः। कोविदारश्चमरिकवृक्षः। 'कोविदारे चमरिकः कुद्दालो युगपत्रकः' इत्यमरः। कस्य चित्तं न विदारयति। अपि तु सर्वस्यापि विदीर्णं करोतीत्यर्थः॥

[A] कोविदारो वृक्षविशेषः। कस्य चित्तं न विदारयति। अपि तु सर्वेषां चित्तं विदारयति। दृ विदारणे। 'कोविदारो युगपत्रः' इति हैमः। किं० को० मन्दो योऽसावनिलो वायुस्तेनाकुलिता व्याप्ताः सर्वमनोज्ञाः शाखा यस्य सः। पुनः को०। पुष्पाणामुद्गम उत्पत्तिस्तेन प्रबलान्युत्कटानि कोमलपल्लवाग्राणि यस्य सः। पु० को०। मत्ता ये द्विरेफा भ्रमरास्तैः परि सामस्त्येन पीतो मधुनो मकरन्दस्य प्रसेको बिन्दुरूपो यस्य सः। धारसेकौ तु सेचने॥

**तारागणप्रवरभूषणमुद्वहन्ती मेघावरोधपरिमुक्तशशाङ्कवक्त्रा।**
**ज्योत्स्नादुकूलममलं रजनी दधाना वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला॥ ७॥**

तारागणेति॥ ताराणां नक्षत्राणां गणः समुदाय एव प्रवरमुत्तमं भूषणम्। पक्षे तारागण इव प्रवरं भूषणम्। 'नक्षत्रमृक्षं भं तारा' इत्यमरः। उद्वहन्ती दधती। मेघैः कृत्वा योऽवरोधो व्यवधानं तस्मात्परिमुक्तो यः शशाङ्कश्चन्द्रः स एव वक्त्रं वदनं यस्याः सा। पक्षे मेघ इव योऽवरोधो वधूटिवयोऽवलम्बनीयो मुखवसनाच्छादन-व्यवहारस्ततः परिमुक्तं तन्नियमानधीनं शशाङ्कमिव चन्द्रमिव वक्त्रं मुखं यस्याः सा। अमलं निर्मलं ज्योत्स्नैव दुकूलं वसनं दधाना परिधानं कृतवती सा। पक्षे ज्योत्स्नेवामलं दुकूलं दधाना सेति। 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः। रजनी यामिनी। 'रजनी यामिनी तमी' इत्यमरः। प्रमदा बाला चानुदिनं प्रतिदिनं वृद्धिं प्रयाति। गच्छतीत्यर्थः॥

---

1. G °विशालशाखः, 2. G. °प्रचुर°, °प्रबलकोमलपल्लवाङ्कः. 3. तु रामा० (४, ३०, ४७) तारागणोन्मीलितचारुनेत्रा 4. L मेघोपरोध°, रामा० निर्दि० स्थ० शशाङ्कोदितसौम्यवक्त्रा 5 रामा० निर्दि० स्थ० ज्योत्स्नांशुकप्रावरणा 6. रामा० निर्दि०, स्थ० प्रमदेव।

[A] रजनी रात्रिः । अनुदिनं प्रतिदिनम् । वृद्धिं प्रयाति । केव बाला प्रमदेव । यथा बाला स्त्री अनुदिनं वृद्धिं प्राप्नोति तद्वत् । किं० रजनी ताराणां गणः समूह एव प्रचुरं यद्भूषणमलङ्कारः तम् उद्वहन्ती धारयन्ती । प्रमदाऽपि वृद्धिं प्राप्तवती भूषणानि दुकूलवासांसि च परिधत्ते । पु० मेघस्योपरोध आच्छादनं तेन परिमुक्तः शशाङ्कश्चन्द्र एव वक्त्रं मुखं यस्याः सा । पु० अमलं निर्मलं ज्योत्स्ना कौमुदीव दुकूलं चौमं तत् वस्ते परिधत्ते इति वसाना ॥

**कारण्डवाननविघट्टितवीचिमालाः कादम्बसारसचयाकुलतीरदेशाः ।**
**कुर्वन्ति हंसविरुतैः परितो जनस्य प्रीतिं सरोरुहरजोरुणितास्तटिन्यः ॥८॥**

कारण्डवेति ॥ कारण्डवानां पक्षिविशेषाणामाननैर्वदनैर्विघट्टिता वीचिमालास्तरङ्गपङ्क्तयो यासु तास्तथोक्ताः । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । कादम्बानां कलहंसानां सारसानां पुष्कराह्वानां चयेन समुदायेनाकुलो व्याकुलस्तीरदेशो यासां तास्तथोक्ताः । 'कादम्बः कलहंसः स्यात्' इत्यमरः । पुष्कराह्वस्तु सारसः' । इत्यमरः । सरोरुहाणां कमलानां रजोभी रेणुभिररुणिता आरक्ताः । 'परागः सुमनोरजः' इत्यमरः । तटिन्यस्तरङ्गिण्यः । 'तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी' इत्यमरः । परितः समन्ततो हंसानां मरालान विरुतैः शब्दैः । 'तिरश्चां वाशितं रुतम्' इत्यमर. । जनस्य लोकस्य प्रीतिं कुर्वन्ति । जनयन्तीत्यर्थः ॥

[A] सरस्यः सरांसि । हंसविरुतैः हंसस्य विरुतानि कूजितानि परितः सर्वतः सर्वप्रकारेण समन्ताज्जनस्य प्रीतिं कुर्वन्ते विदधते । कथं० सरस्यः । कारण्डवानां पक्षिविशेषाणां योऽसावाहवो युद्धं तेन विघट्टिता वीचिमाला कल्लोलपङ्क्तिर्यासां ताः । पु०किं सरस्यः । कादम्बाः कलहंसाश्च सारसाश्च कादम्बसारसास्तेषां कुलानि सजातीयसमूहास्तैराकुलो व्याप्तस्तीरदेशो यासां ताः । किं० सरोरुहाणां कमलानां रजोभिररुणिता रक्तीकृताः सरोरुहरजोरुणिताः । सरस्यः इत्यत्र गौरादिपाठात् ङीष् । 'महान्ति सरांसि सरस्यः' इति जिनेन्द्रबुद्धिः । अमरसिंहस्तु 'कासारः सरसी सरः' इति विशेषमूचे ॥

**नेत्रोत्सवो हृदयहारिमरीचिमालः प्रह्लादकः शिशिरसीकरवारिवर्षी ।**
**पत्युर्वियोगविषदिग्धशरक्षतानां चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ॥९॥**

नेत्रोत्सव इति ॥ नेत्राणां लोचनानामुत्सवो हर्षजनकः । 'लोचनं नयनं नेत्रम्' इत्यमरः । हृदयहारिणी मरीचिमाला किरणपङ्क्तिर्यस्य स तथोक्तः । प्रकर्षेण ह्लादको हर्षजनकः । शिशिरं शीतलं सीकराणां वारि वारिकणं वर्षति स तथोक्तश्चन्द्रः सुधाकरः । पत्युः प्रियस्य । वियोगो विरह एव विषदिग्धशरो बाणस्तेन

---

1. G कारण्डवैरभि° कारण्डवाहव° 2. G चया 3. K सरोरुहरजोरुणिताश्च नद्यः C। C परां कमलरेणुवृतास्तटिन्यः, L मनोज्ञकमलारुणिताश्च नद्यः । 4. G °गौरः 5. प्रह्लादयन शिशिरशीकरवारिवर्षैः 6 K I R¹ रुचत्यन दिनम अनुदिनम ।

क्षता प्रणितास्तासां तथोक्तानामङ्गनानां विरहिणीनाम् । तनुं शरीरमतितरामत्यन्तं दहति संतापयतीत्यर्थः ॥

[A] ईदृशोऽपि चन्द्रोऽनुदिनं प्रशस्तमङ्गं यासां ता अङ्गनास्तासां स्त्रीणाम् । तनुं शरीरम् । दहति प्रज्वालयति । किं० नेत्रयोरुत्सवः उत्सवभूतः नेत्रोत्सवः । पु० हृदयहारिण्यो मनोहरा या मरीचयो दीप्तयस्ताभिर्गौरः श्वेतवर्णस्तथा । पु० प्रह्लादकः प्रकर्षेणाह्लादयति हर्षमुत्पादयति प्रह्लादकः आह्लादोत्पादकः । पु० शिशिरं शीकरमयं जलकणरूपं वारि तद्वर्षनीत्येवंशील: शिशिरशीतलवारिवर्षी । वातास्तं वारि शीकरः । किं० अङ्गनानाम् । पत्युर्भर्तुर्वियोगविषदिग्धशरक्षतानां वियोग एव विरह एव विषं तेन दिग्धा लिप्ता ये शरा बाणास्तैः क्षताः खण्डितास्तथा तासां अथवा वियोग एव विषदिग्धशरस्तेन क्षताः पीडिता हता वा तासाम् । 'विषाक्ते दिग्धलिप्तकौ' इति हैमः ॥

आकम्पयन्फलभरानतशालिजालानानर्तयंस्तरुवरान्कुसुमावनम्रान् ।
उत्फुल्लपङ्कजवनां नलिनीं विधुन्वन्यूनां मनश्चलयति प्रसभं नभस्वान् ॥१०॥

आकम्पयन्निति ॥ फलानां भरेण भारेणानता नम्रा ये शालिजालाः शालिसमूहास्तानाकम्पयन् । कुसुमावनम्रांस्तरुवरान्वृक्षश्रेष्ठानानर्तयन् । एतेन पवने मान्द्यमावेदितम् । उत्फुल्लानि विकसितानि पङ्कजानि कमलानि यस्मिंस्तादृशं वनं जलं यस्यां तां तथोक्ताम् । 'जलम् । पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः । नलिनीं कमलिनीं । विधुन्वन्विकम्पयन् । एतेन तस्मिन्सौगन्ध्यं शैत्यं चावेदितम् । नभस्वान्वायुः । यूनां तरुणानाम् । मनः । प्रसभमत्यन्तम् । चलयति चञ्चलयतीत्यर्थः ॥

[A] नभस्वान्वायुः । प्रसभं हठात् । यूनां तरुणानाम् । मनश्चित्तम् । स्खलयति कामातुरं करोति । किं० कुर्वन् फलभरेणानता ये शालिजाला व्रीहिसंचयाः तानाकम्पयन् । ईषद्धूनयन् । पु० किं० कुर्वन् । कुसुमावनम्रान् तरुवरान् आनर्त्तयन् । कुसुमैः पुष्पैरवनम्रा नतास्तथा तान् तरुषु वृक्षेषु वरा श्रेष्ठास्तरुवरास्तान् आनर्त्तयन् । नृत्यं कारयन् । पु० किं० कुर्वन् । नलिनीं कमलिनीम् । विधुन्वन् विशेषेण कम्पयन् । किं० न० उत्फुल्लं उत्प्राबल्येन फुल्लं विकसितं पङ्कजवनं कमलवनं यस्यां सा ताम् । अथ उत्प्राबल्येन फुल्लानि प्रफुल्लितानि पङ्कजवने यस्यास्ताम् ॥

सोन्मादहंसमिथुनैरुपशोभितानि स्वच्छप्रफुल्लकमलोत्पलभूषितानि ।
मन्दप्रभातपवनोद्गतवीचिमालान्युत्कण्ठयन्ति सहसा हृदयं सरांसि ॥११॥

सोन्मादेति ॥ सोन्मादानामुन्मादसहितानां हंसानां मरालानां मिथुनैर्द्व-

1. L °जालम, °जालानि 2. C कुरवकान्, तरुवनान् 3. BG प्रोत्फुल्ल°, प्रोत्फुल्लपङ्कजवतीम् 4. BK मदयति, A स्खलयति 5. B B[1] C[1] स्वच्छप्र° 6. G °चारु° 7. K L मन्दं प्रभात°, मन्दप्रचार° 8. °पवनोद्धत° 9. G उत्कम्पयन्ति 10. B[1] L हृदयं प्रसभम, हृदयं सहसा ।

न्द्वैरूपशोभितानि भूषितानि । अपि च स्वच्छानि निर्मलानि प्रफुल्लानि च यानि कमलानि पद्मान्युत्पलानि नीलेन्दीवराणि च वैर्भूषितानि शोभितानि । मन्देन मन्थरेण प्रभातपवनेनोषःकालीनेन वायुनोद्गता उत्पन्ना वीचिमालास्तरङ्गपङ्क्तयो येषु तानि तथोक्तानि । सरांसि सरोवराणि । जनानामिति शेषः । हृदयं सहसोत्कण्ठयन्त्युत्कण्ठायुक्तं कुर्वन्तीत्यर्थः ॥

[A] सरांसि तडागाः । प्रसभं हठात् । हृदयमुत्कण्ठयन्ति । उत्कण्ठायुक्तं कुर्वन्ति । कामिनामिति शेषः । कथम्भूतानि सरांसि । सोन्मादानि उन्मादयुक्तानि यानि हंसमिथुनानि राजहंसद्वन्द्वानि वैरुपशोभितानि । शोभायुक्तानि कृतानि । पु० स्वच्छानि निर्मलजलानि । चारुकमलोत्पलभूषितानि । कमलानि सूर्यविकासीनि, उत्पलानि चन्द्रविकासीनि, ततो द्वन्द्वः । चारूणि मनोहराणि कमलोत्पलानि[1] ।

**नष्टं धनुर्बलभिदो जलदोदरेषु सौदामिनी स्फुरति नाद्य वियत्पताका ।**
**धुन्वन्ति पक्षपवनैर्न नभो बलाकाः पश्यन्ति नोन्नतमुखा गगनं मयूराः॥१२॥**

नष्टमिति ॥ अद्येदानीं जलदानां मेघानामुदरेषु गर्भेषु । दृश्यमानमिति शेषः । बलनामकं दैत्यं भिनत्ति विदारयति हन्तीति यावत् । तस्य बलभिदो बलारातेरिन्द्रस्य धनुः कार्मुकम् । नष्टं गतम् । न दृश्यत इत्यर्थः । वियत आकाशस्य । पताका सौदामिनी तडित् । न स्फुरति न दीव्यति । बलाका विसकण्ठिका । 'बलाका विसकण्ठिका' इत्यमरः । पक्षाणां पत्राणां पवनैर्वातैः । 'गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्' इत्यमरः । नभो न धुन्वन्ति न कम्पयन्ति । उन्नतमूर्ध्वं मुखं वदनं मेघदिदृक्षया येषां ते तथोक्ताः । मयूरा बर्हिणः । गगनमाकाशम् । न पश्यन्ति नावलोकयन्तीत्यर्थः ॥

**नृत्यप्रयोगरहिताञ्छिखिनो विहाय हंसानुपैति मदनो मधुरप्रगीतान् ।**
**मुक्त्वा कदम्बकुटजार्जुनसर्जनीपान्सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥१३॥**

नृत्येति ॥ मदनः कन्दर्पो नृत्यप्रयोगेण नर्तनप्रयोगेण रहिताञ्शिखिनो बर्हिणः । विहाय त्यक्त्वा । मधुरं प्रगीतं गानं येषां तांस्तथोक्तान्हंसानुपैति प्राप्नोति । कुसुमानां पुष्पाणामुद्गम उत्पत्तिस्तस्य श्रीः शोभा कदम्बो धूलिकदम्बः, कुटजः शक्रनामको वृक्षविशेषः, अर्जुनः ककुभवृक्षः, सर्जः शालवृक्षः, नीपः पूर्वोक्तकदम्बभिन्नकदम्बस्तान् । 'अथ कुटजः शक्रः' इत्यमरः । 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः । मुक्त्वा त्यक्त्वा । सप्तच्छदान्सप्तपर्णवृक्षानुपगता प्राप्तेत्यर्थः ॥

---

1. इत ऊर्ध्वं द्वाविंशश्लोकपर्यन्तं (A) मूलकोषपाठस्त्रुटितः 2. G जलदोदकेषु 3. B¹ G नापि 4. G चोन्नतमुखाः, नोद्गतमुखाः, नोद्गतमुखाः 5. G °प्रतीतान् 6. B¹ त्यक्त्वा 7. G °नीपवृक्षान् 8. G उद्गतश्रीः तु. रामा. ४, ३०, ३० सप्तच्छदानां कुसुमोपगन्धी ।

**शेफालिकाकुसुम[1]गन्धमनोहराणि स्वस्थ[2]स्थिताण्डजकुल[3]प्रतिना[4]दितानि ।**
**पर्यन्तसंस्थितमृगीनयनोत्पलानि प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम्[5]॥१४॥**

शेफालिकेति ॥ शेफालिका सुवहा तस्याः कुसुमानां पुष्पाणां गन्धेन मनोहराणि सुन्दराणि । 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा' इत्यमरः । स्वस्थमनुद्वेगं तीव्रतराणि(?)तापदावानलादिदुःखाभावाद्यथा भवति तथा स्थितानामुपविष्टानामण्डजानां पक्षिणां कोकिलादीनां कुलैः समुदायैः प्रतिनादितानि प्रतिध्वनितानि । पर्यन्ते संस्थितानां प्रान्तस्थितानां मृगीणां हरिणीनां नयनानि लोचनान्येवोत्पलानि कुवलयानि येषु तानि तथोक्तानि । उपवनान्युद्यानानि ।पुंसां मनांसि प्रोत्कण्ठयन्ति समुत्कण्ठितानि कुर्वन्तीत्यर्थः ॥

**कह्लार[6]पद्मकुमुदानि मुहु[7]र्विधुन्वंस्तत्संगमादधिकशीतलता[8]मुपेतः ।**
**उत्[9]कण्ठयत्यतितरां पवनः प्रभाते पत्रान्तलग्नतुहिना[10]म्बुविधूयमानः ॥ १५ ॥**

कह्लारेति ॥ कह्लारपद्मकुमुदानि कह्लारं सौगन्धिकम्, पद्मं नलिनम्, कुमुदं कैरवं तानि । 'सौगन्धिकं तु कह्लारम्' इत्यमरः । 'वा पुंसि पद्मं नलिनम्' इत्यमरः । 'सिने कुमुदकैरवे' इत्यमरः । मुहुर्वारंवारम् । विधुन्वन् । तेषां संगमात्स्पर्शादधिकमत्यन्तं शीतलताम् । उपेतः प्राप्तः । पत्रान्ते दलप्रान्ते लग्नं यत्तुहिनाम्बु हिमजलं तद्विधूयते स तथोक्तो विधूयमानः । पवनो वायुः । प्रभाते प्रातःकाले । अतितरामत्यन्तम् । उत्कण्ठयत्युत्सुकयतीत्यर्थः ॥

**संपन्नशालिनिचयावृतभूतलानि स्व[11]स्थस्थितप्रचुरगोकुलशोभितानि ।**
**हंसैः [12]ससारसकुलैः प्रतिनादितानि सीमान्तराणि जनयन्ति नृणां[13] प्रमोदम्॥१६॥**

संपन्नेति ॥ संपन्नानां जलसिक्तानां शालीनां निचयेन समूहेनावृतानि छादितानि भूतलानि येषां तानि तथोक्तानि । स्वस्थमनुद्वेगं स्थितानां प्रचुराणां बह्वीनां गवां कुलैः समुदायैः शोभितानि भूषितानि । सारसानां पक्षिविशेषाणां कुलैः सहितास्तैस्तथोक्तैर्हंसैः । प्रतिनादितानि । सीमान्तराणि । नृणां जनानाम् । प्रमोदं हर्षम् । जनयन्त्युत्पादयन्तीत्यर्थः ॥

**हंसैर्जिता सुललिता गतिरङ्गनानामम्भोरुहैर्विकसितैर्मुखचन्द्रकान्तिः ।**
**नीलोत्पलैर्मद[14]कलानि विलोकि[15]तानि भ्रूविभ्रमाश्च [16]रुचिरास्तनुभिस्तरङ्गैः॥१७॥**

---

1. C[1] BC °राग° 2. L शाखास्थिता°, सुस्थस्थिता°, स्वच्छस्थिता° 3. G °गण° 4. G °प्रतिवादितानि 5. C यूनाम् 6. तु. रामा. ४, ३०, ३६, कल्हारशीताः पवनाः K °कुसुमानि 7. G मुदा 8. K उपेत्य 9. L सोत्कं करोति हृदयम् ; सोत्काः करोति वनिताः ; सोत्कां करोति वनिताम् 10. G °तुहिनानि हरंस्तरुणाम् 11. L सुष्ठु, सुस्थ° तु. रामा. ४, ३०, ४८, विपक्वशालिप्रसवानि 12. L च तु. रामा. ४, ३०, ४२ ससारसाराव-विनादितासु‥‥‥हंसाः 13. L. C जन° 14. G मदचलानि 15. G विलोचनानि 16. G सरिताम् ।

हंसैरिति ॥ अङ्गनानां पुरंध्रीणाम् । सुललितात्यन्तम् रमणीया गतिर्हंसैर्जिता । मुखचन्द्रस्य वदनचन्द्रस्य । कान्तिः शोभा । विकसितैर्विकचैरम्भोरुहैर्जिता । मदेन कलानि मधुराणि विलोकितान्यवलोकितानि नीलोत्पलैर्जितानि । रुचिराः सुन्दरा भ्रूविभ्रमाश्च । तनुभिः सूक्ष्मैः । तरङ्गैर्वीचिभिः । जिता इति लिङ्गवचनविपरिणामेनान्वयः ॥

श्यामा लताः कुसुमभारनतप्रवालाः स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम् ।
दन्तावभासविशदस्मितचन्द्रकान्तिं कङ्केलिपुष्परुचिरा नवमालती च ॥१८॥

श्यामा इति ॥ कुसुमानां पुष्पाणां भारेण नता नम्राः प्रवालाः पल्लवा यासां तास्तथोक्ताः । श्यामा हरिद्वर्णाः । तत्र मध्ये याश्च लता व्रततयः । 'वल्ली तु व्रततिर्लता' इत्यमरः । स्त्रीणां नारीणाम् । धृतानि भूषणानि यैस्तेषां बाहूनां कान्तिं शोभाम् । हरन्त्यपनयन्ति । कङ्केलिपुष्परुचिरा नवमालती नूतनमालिका च । दन्तानां रदनानामवभासेन प्रभया विशदं निर्मलं स्मितमेव चन्द्रकान्तिम् । 'रदना दशना दन्ताः' इत्यमरः । हरतीति विभक्तिविपरिणामेनान्वयः ॥

केशान्नितान्तघननीलविकुञ्चिताग्रानापूरयन्ति वनिता नवमालतीभिः ।
कर्णेषु च प्रवरकाञ्चनकुड्मलेषु नीलोत्पलानि विविधानि निवेशयन्ति ॥१९॥

केशानिति ॥ वनिता अबलाः । नितान्तमत्यन्तं घनाः संकीर्णा नीलाः कृष्णवर्णा विकुञ्चिताः कुटिला अत एवाग्राः श्रेष्ठास्तांस्तथोक्तान्केशान्कुन्तलान् । 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः' इत्यमरः । नवमालतीभिर्नवमालतीकुसुमैः । आपूरयन्ति । प्रवराणि श्रेष्ठानि काञ्चनकुड्मलानि स्वर्णताटङ्कादीनि येषु तेषु तथोक्तेषु, कर्णेषु श्रवणेषु । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । विविधानि विचित्राणि । नीलोत्पलानीन्दीवराणि । निवेशयन्ति स्थापयन्ति अवलम्बयन्तीत्यर्थः ॥

हारैः सचन्दनरसैः स्तनमण्डलानि श्रोणीतटं सुविपुलं रसनाकलापैः ।
पादाम्बुजानि कलनूपुरशेखरैश्च नार्यः प्रहृष्टमनसोऽद्य विभूषयन्ति ॥२०॥

हारैरिति ॥ प्रहृष्टमनसः प्रहर्षितचेतसः । नार्यः स्त्रियोऽद्य । सचन्दनरसैश्चन्दनद्रवसहितैर्हारैः । स्तनमण्डलानि कुचमण्डलानि । रसनाकलापैः काञ्चीगुणैः । सुविपुलं महत् । श्रोणीतटं कटिपश्चाद्भागम् । कलनूपुरशेखरैरुत्तममञ्जीरैः । पादाम्बुजानि चरणकमलानि च । विभूषयन्ति ॥

स्फुटकुमुदचितानां राजहंसस्थितानां मरकतमणिभासा वारिणा भूषितानाम् ।
श्रियमतिशयरूपां व्योम तोयाशयानां वहति विगतमेघं चन्द्रतारावकीर्णम् ॥२१॥

---

1. G °भृत°, °वहु° 2. G दन्ते विभाम°, दन्तावसक्त° 3. G °वक्त्राम् 4. L साशोकपुष्परचिता नवमालती च, K बन्धुकपुष्प० 5. G °निकुञ्चिताग्रान् 6. K प्रवल°, प्रचुर° 7. G कुण्डलेषु 8. K विकचानि, रुचिराणि 9. L निवेशयन्ते 10. L पादाम्बुजम् 11. K °कर° L कनकनूपुर, कनकनिर्मितनूपुरैश्च 12. G प्रसन्नमनसः प्रविभूषयन्ते 13. K आश्रितानाम् G आपूरितानाम् । 14. G आपूरितानाम् ।

स्फुटेति ॥ विगता मेघा यस्मात्तत्तथोक्तम् । चन्द्रश्च तारा नक्षत्राणि च ताभिरवकीर्णं व्याप्तम् । व्योमाकाशम् । स्फुटैर्विकसितैः कुमुदैः कैरवैश्चिता व्याप्तास्तेषां तथोक्तानाम् । राजहंसा हंसविशेषाः स्थिता येषु तेषां तथोक्तानाम् । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । मरकतमणेर्भा इव भाः कान्तिर्यस्य तेन तथोक्तेन । वारिणा जलेन । भूषितानां तोयाशयानां जलाशयानाम् । अतिशयरूपामत्यन्तसुन्दराम् । श्रियं शोभाम् । वहति धत्त इत्यर्थः । मालिनीवृत्तम्, तल्लक्षणं तु पूर्वोक्तम् ॥

**शरदि[1] कुमुदसङ्गाद्वायवो[2] वान्ति[3] शीता विगतजलदवृन्दा दिग्विभागा मनोज्ञाः।**
**विगतकलुषमम्भः[4] श्यानपङ्का धरित्री विमलकिरणचन्द्रं[5] व्योम ताराविचित्रम् ॥२२॥**

शरदीति ॥ शरदि शरत्काले । कुमुदस्य कैरवस्य सङ्गात्संसर्गात् शीताः शीतलाः । वायवः पवनाः । वान्ति वहन्ति । दिग्विभागा आशाप्रान्ताः । 'दिशस्तु ककुभः काष्ठा आशाश्च' इत्यमरः । विगतानि जलदानां मेघानां वृन्दानि समूहा येभ्यस्ते तथोक्ताः । अत एव मनोज्ञाः सुन्दराः । अम्भो जलम् । विगतं विनष्टं कलुषं कालुष्यं यस्य तत्तथोक्तम् । निर्मलमित्यर्थः । धरित्री क्षितिः । 'धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः । श्यानपङ्का शुष्कपङ्का । व्योमाकाशम् । विमला निर्मलाः किरणा मयूखा यस्य तादृशश्चन्द्रो यत्र तत्तथोक्तम् । 'किरणोस्रमयूखांशु–' इत्यमरः । ताराभिर्नक्षत्रैर्विचित्रं सुन्दरमित्यर्थः । 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्' इत्यमरः ॥

**दिवसकरमयूखैर्बोध्यमानं प्रभाते वरयुवतिमुखाभं पङ्कजं जृम्भतेऽद्य[6] ।**
**कुमुदमपि[7] गतेऽस्तं[8] लीयते[9] चन्द्रबिम्बे[10] हसितमिव वधूनां प्रोषितेषु प्रियेषु ॥२३॥**

दिवसेति ॥ प्रभाते प्रातःकाले । दिवसकरस्य सूर्यस्य मयूखैः किरणैः । बोध्यमानं विकाश्यमानमित्यर्थः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । पङ्कजं कमलम् । अद्येदानीम् । जृम्भते शोभते । कुमुदं कैरवमपि । चन्द्रबिम्बे अस्तमस्ताचलं गते प्राप्ते सति । प्रोषितेषु विदेशगतेषु । प्रियेषु कान्तेषु । वधूनां रमणीनाम् । हसितमिव । लीयते क्षीणं भवतीत्यर्थः ॥

[A] अद्य शरदृतौ । पङ्कजं कमलम् । जृम्भते विकाशमाप्नोति । जृम्भ विकसने । पङ्कजमित्यत्र जातावेकवचनम् । कथं० पं० । प्रभाते दिवसकरस्य सूर्यस्य मयूखाः किरणास्तैः । बोध्यमानं विकासं प्राप्यमाणम् । पु० कि० वरा श्रेष्ठा या युवतिर्नारी तस्या मुखमाननं तद्वदाभा कान्तिर्यस्य तत् । पु० कुमुदं चन्द्रबिम्बे चन्द्रमण्डले अस्तमुपगते प्राप्ते सति । ग्लायते विच्छायत्वं प्राप्नोति । सङ्कुचतीत्यर्थः । किमिव । प्रोषितेषु चलितेषु । प्रियेषु भर्तृषु । वधूनां नारीणां हसितमिव । यथा प्रोषिते भर्तरि नारीणां हास्यं विकाशं न प्राप्नोति उत्साहाभावात् । तद्वत् कुमुदमपि ॥

---

1. G सुरभि° 2. G कुसुम° 3. G °तोयान् 4. C[1]C यान्ति 5. विशद°, व्यपगतजलवृन्दा दिव्यरूपाश्च मेघाः 6. G श्यालिपङ्का 7. G शोभते 8. G कुमुदमुपगतश्री· ग्लापिते 9. G म्लायते 10. G चन्द्रबिम्बम्

**असितनयन[1]लक्ष्मीं लक्षयित्वोत्पलेषु क्वणितकनककाञ्ची[2]ं मत्तहंस[3]स्वनेषु ।**
**अधररुचिरशोभां बन्धुजीवे प्रिया[4]णां पथिकजन इदानीं रोदिति भ्रा[5]न्तचित्तः ॥२४**

असितेति ॥ पथिकजनः पान्थजनः । इदानीं शरत्काले । प्रियाणां प्रेयसीनाम् । असितानां कृष्णानां नयनानां नेत्राणां लक्ष्मीं शोभाम् । 'कृष्णे नीलासितश्याम-कालश्यामलमेचकाः । इत्यमरः । 'लोचनं नयनं नेत्रम्' इत्यमरः । उत्पलेषु कमलेषु । क्वणिता क्वणन्ती या कनककाञ्ची सुवर्णरशना ताम् । मत्तहंसस्वनेषून्मत्तमरालशब्देषु । अधरस्योष्ठस्य रुचिरा सुन्दरा या शोभा ताम् । बन्धुजीवे बन्धूककुसुमे । लक्षयित्वा दृष्ट्वा । भ्रान्तचित्तः सन्रोदिति । रोदनं करोतीत्यर्थः ॥

[A] इदानीं शरदृतौ । पथिकजनः भ्रान्तचित्तः सन् । रोदिति विलपति । भ्रान्तं भ्रमोपलावृतं चित्तं यस्य स भ्रान्तचित्तः । किं कृत्वा उत्पलेषु नीलकमलेषु । प्रियाणां स्त्रीणाम् । असिते कृष्णे ये नयने नेत्रे तयोर्लक्ष्मीः शोभा ताम् । लक्षयित्वा दृष्ट्वा । लक्ष दर्शनाङ्कनयोः । पुनर्मत्ता मदोन्मत्ता ये हंसास्तेषां स्वनाः शब्दाः तेषु । क्वणिता शब्दायमाना या कनककाञ्ची सुवर्णकटिमेखला ताम् । लक्षयित्वा मम भार्यायाः सर्वं विभज्यैभिर्गृहीतं दृश्यते तस्याः का गतिरिति भ्रान्तचित्तः सन् । मालिनीवृत्तानि ॥

**स्त्रीणां वि[6]हाय वदनेषु शशाङ्कलक्ष्मीं[7] का[8]मं च हंसवचनं मणिनूपुरेषु ।**
**बन्धूककां[9]न्तिमधरेषु मनोहरेषु क्वापि प्रयाति सुभगा शरदागमश्रीः ॥ २५ ॥**

स्त्रीणामिति ॥ सुभगा सुन्दरा । या शरदागमस्य श्रीः शोभा । शशाङ्कस्य चन्द्रस्य लक्ष्मीं शोभाम् । स्त्रीणां सुन्दरीणाम् । वदनेषु मुखेषु । कामं रमणीयम् । हंसवचनं मरालविरुतां च । मणिनूपुरेषु मणिखचितमञ्जीरेषु । बन्धूकस्य बन्धूककुसुमस्य कान्तिं च । मनोहरेषु सुन्दरेष्वधरेषु । विहाय त्यक्त्वा । क्वापि कुत्रचिदपि । प्रयाति गच्छतीत्यर्थः । एतेन हेमन्तागमः सूचितः । वसन्ततिलकावृत्तम् ॥

[A] क्वापि प्रदेशे । शरदृतोरागमः शरदागमस्तस्य श्रीः शोभा । शुभतां सुन्दरत्वं प्रयाति । विशेषकान्ति प्राप्नोति । किं कृत्वा स्त्रीणां वदनेषु मुखेषु । शशाङ्कस्य चन्द्रस्य लक्ष्मी शोभा तां चन्द्रदीप्तिम् । विधाय कृत्वा । तु पुनर्मणिभिर्युक्तानि नूपराणि मणिनूपुराणि तेषु । काम्यं कमनीयम् । हंसवचनं मरालस्वरम् । विधाय कृत्वा हंसवाग्वन्मनोरमं नूपुरशब्दं कृत्वा । पुनर्मनोहरेषु सुन्दरेषु । अधरेष्वोष्ठेषु । बन्धूकपुष्पं बन्धूकजीवकपुष्पद्युतिमरुणत्वं विधाय । 'बन्धूको बन्धूजीवकः' इति हैमः ॥ वसन्ततिलकावृत्तम् ॥

---

**1.** G °कान्तिम् **2.** G °कान्तिम् **3.** G °हंसी° **4.** K प्रियायाः **5.** C भ्रान्तचेताः **6.** G निधाय, विधाय **7.** G °लक्ष्मीः **8.** G काम्यं तु, L हास्ये विशुद्धवदने कुमुदाकर-श्रीः । विशुद्धवदने कुमुदाकरश्रीम **9.** G °पुष्पम् ।

**विकचकमलवक्त्रा फुल्लनीलोत्पलाक्षी विकसितनवकाशश्वेतवासो वसाना।**
**कुमुदरुचिरकान्तिः कामिनीवोन्मदेयं प्रतिदिशतु शरद्वश्चेतसः प्रीतिमग्र्याम् ॥२६॥**

विकचेति ॥ विकचं विकसितं कमलमेव वक्त्रं मुखं यस्याः सा तथोक्ता। पक्षे विकचं कमलमिव वक्त्रं यस्याः सेति। फुल्लानि प्रफुल्लानि नीलोत्पलानीन्दीवराण्येवाक्षिणी यस्याः सेति। विकसितं विकासं प्राप्तं नवकाशं नूतनं काशकुसुममेव श्वेतवासः श्वेतवस्त्रम्। पक्षे विकसितनवकाशमिव श्वेतवासो वसाना। कुमुदेन कैरवेण सदृशी रुचिरा कान्तिर्यस्याः सेयं तथोक्ता। पक्षे कुमुदमिव रुचिरा कान्तिर्यस्याः सेयं शरद् उन्मदोत्कटमदा। कामिनीव प्रेयसीव। वो युष्माकं चेतसश्चित्तस्य। अग्र्यामुत्तमाम् प्रीतिं प्रतिदिशतु ददात्वित्यर्थः। मालिनीवृत्तमेतत् ॥

इति भारद्वाजगोत्रोत्पन्नमणिराममविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कवि-श्रीकालिदासकविवराप्रणीकृतावृतुसंहारे महाकाव्ये शरद्वर्णनं नाम तृतीयः सर्गः ॥

[A] इयं शरदृतुः। वो युष्माकम्। चेतसि अग्र्यां प्रधानाम्। प्रीतिमुपदिशतूत्पादयतु करोत्वित्यर्थः। केव कामिनीव किं० कामिनी। उत्प्रबलो मदो यस्याः सोन्मदा। यथोन्मदा कामिनी वरां प्रीतिं जनयति तद्वत्। किं० शरत्। विकचं विकस्वरं यत्कमलं तदेव वक्त्रं मुखं यस्याः सा। कामिनीपक्षे विकचकमलवद्वक्त्रं यस्याः सा। पुनः किं शरत्कामिनी च। फुल्लं विकासं प्राप्तं यन्नीलोत्पलं नीलकमलं तदेवाक्षिनेत्रं यस्याः सा। जातावेकवचनम् अथवा फुल्लानि विकासं प्राप्तानि यानि नीलोत्पलानि तान्येवाक्षीणि यस्याः सा। कामिनीपक्षे तु फुल्लनीलोत्पलवत् अक्षिणी यस्याः सा नीलोत्पलाक्षी। पु० किं० शरत् कामिनी च। विकसितो योऽसौ नवः कासः स एव श्वेतं वासो वस्त्रं तद्। वसाना परिदधाना। कामिनीपक्षे विकसितो योऽसौ नवः कासस्तद्वच्छ्वेतं श्वेतवर्णं वस्त्रं यस्याः सा। कुमुदः कैरवं स एव रुचिरो मनोज्ञो हासो यस्याः सा। कामिनीपक्षे तु कुमुद इव रुचिरो मनोहरो हासो यस्याः सा कुमुदरुचिरहासा। मालिनीवृत्तम् ॥

नागपुरीयतपोगुणभूपश्रीअमरकीर्त्तिविरचितायामृतुवर्णनस्य वृत्तौ तृतीयः सर्गोऽभवद्भव्यः ॥

इति श्रीअमरकीर्तिकृतायां कविश्रीकालिदासविरचितविशेषकाव्यटीकायामृतुसंहारे शरदृतुवर्णनो नाम तृतीयः सर्गः ॥

---

1. L कुसुमितनवकाशा व्याकुलालम्बिवासाः, °श्वेतवासो वसानां; कुसुमिततरुशाखा°
2. G कुमुदरुचिरहासा; B[1] जनितरुचिरहासा
3. G चोन्मदेयं; चोन्मदाश्च
4. L K उपदिशतु, परिदिशतु
5. L चेतसाम् G A चेतसि
6. G उग्राम्, K अग्राम् तुलनीयं शरद्वर्णनं सुभाषितावल्याम् १७९१-१८२६; किरातार्जुनीये ४, २–३८; माघे ६, ४१–५४।

अथ क्रमप्राप्तं हेमन्तकालं वर्णयति—

नवप्रवालोद्गमसस्यरम्यः प्रफुल्ललोध्रः परिपक्वशालिः ।
विलीनपद्मः प्रपतत्तुषारो हेमन्तकालः समुपागतोऽयम् ॥ १ ॥

नवेति ॥ नवानां नूतनानां प्रवालानां पल्लवानामुद्गम उत्पत्तिः सस्यानि च वै रम्यो रमणीयः । प्रफुल्लाः संफुल्ला लोध्रा लोध्रवृक्षा यस्मिन्स तथोक्तः । परिपक्वाः परिणताः शालयो धान्यानि यस्मिन्स तथोक्तः । विलीनानि म्लानानि पद्मानि कमलानि यस्मिन्स तथोक्तः । प्रपतत्तुषारो हिमं यस्मिन्स तथोक्तः । 'तुषारस्तुहिनं हिमम् ' इत्यमरः । अयं हेमन्तकालः । समुपागत आगतः । प्राप्त इत्यर्थः । उपेन्द्रवज्रा-वृत्तम् । तल्लक्षणं तु—'उपेन्द्रवज्रा जतजास्ततो गौ' इति ॥

[A] हे प्रियेऽयं हेमन्तकालः समुपागतः । कथं० हेमन्तः । यवानां प्रवाला अङ्कुराणि तेषामुद्गमरूपमुत्पत्तिरूपं यच्छस्यं फलं तेन रम्यो रमणीयः । पु० प्रफुल्ला लोध्रा लोध्रवृक्षा यस्मिन् स प्रफुल्ललोध्रः । पु० किं० परिपक्वाः शालिक्षेत्राणि यस्मिन्सः । देशीयग्रहणे तद्देशस्य ग्रहणम् । पु० किं० । गताश्रवसन्ना असवः प्राणा येषां तानि ईदृशानि पद्मानि यस्मिन् सः । अर्थाद्गतपङ्कजवनः । पुनः कीदृशः प्रपतत्तुषारः प्रपतत्प्रकर्षेण पतनशीलस्तुषारः शीतो यस्मिन् सः । प्रिये समेतो हिमकाल एष इत्यपि पाठः । तत्र हे प्रिये, एषः हिमकालः हिमस्य शीतस्य कालः समयः । समेतः प्राप्तः ॥

मनोहरैः कुङ्कुमरागरक्तैस्तुषारकुन्देन्दुनिभैश्च हारैः ।
विलासिनीनां स्तनशालिनीनामलंक्रियन्ते स्तनमण्डलानि ॥२॥

मनोहरैरिति ॥ स्तनैः कुचैः शालन्ते शोभन्त इति स्तनशालिन्यस्तासां तथोक्तानां विलासिनीनां विलासवतीनां स्तनमण्डलानि कुचमण्डलानि मनोहरैः कुङ्कुमस्य काश्मीरजन्मनो रागेण रक्ताः पिञ्जरास्तैस्तथोक्तैः । 'अथ कुङ्कुमम् । काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने' इत्यमरः । तुषारो हिमम्, कुन्दः कुन्दकुसुमम्, इन्दुश्चन्द्रस्तैर्निभाः सदृशास्तैस्तथोक्तैस्तैर्हारैर्मुक्ताहारैरलंक्रियन्त इत्यर्थः ॥

[A] हरन्ति परेषां चित्तमिति हाराः मुक्तानां मौक्तिकानां हारा मुक्ताहारास्तैः विलासनीनां विलासवतीनां स्त्रीणां स्तनानां मण्डलानि स्तनमण्डलानि कुचप्रदेशाः । अलंक्रियन्ते शोभायुक्तानि क्रियन्ते । कीदृशैर्हारैः मनोहरैः । तुषारो हिमश्च कुन्दश्च इन्दुश्च तुषारकुन्देन्दवः तद्वन्नितरामतिशयेन भान्तीति । तुषारकुन्देन्दु-निभास्तैः । किं० वि० स्तवैः स्तुतिभिः शालन्ते शोभन्ते यास्ताः । तासां गानतत्पराणां अथवास्तवाच्छालन्ते शोभते यास्ता तासां स्तुत्यधिकशोभिनीनाम् ॥

---

1. G यव° 2. K °पुष्प° 3. G गतासुपद्मः, 4. G प्रिये । तुलनीयमुपजीव्यत्वेन रामायणीयं ३, १६ हेमन्तवर्णनम् । सुभाषितावल्याम् १८२७—१८४६; किरातार्जुनीये—पञ्चमः सर्गः; माघे ६, ५५—६१ 5. मनोरमैः 6. L °पिङ्गैः, °पिञ्जरैः, चन्दनरागगौरैः 7. G नवयौवनानाम् 8. A स्तव° I G नालंक्रियन्ते ।

**न बाहुयुग्मेषु विलासिनीनां प्रयान्ति सङ्गं वलयाङ्गदानि ।**
**नितम्बबिम्बेषु नवं दुकूलं तन्वंशुकं पीनपयोधरेषु ॥ ३ ॥**

नेति ॥ विलासिनीनां बाहुयुग्मेषु करयुगेषु । वलयानि कटकान्यङ्गदानि केयूराणि तानि । 'कटको वलयोऽस्त्रियाम्' इत्यमरः । 'केयूरमङ्गदं तुल्ये' इत्यपि । सङ्गं संबन्धम् । न प्रयान्ति न प्राप्नुवन्ति । नवं नूतनम् । दुकूलं वस्त्रम् । नितम्बबिम्बेषु कटिपश्चाद्भागेषु । सङ्गं न प्रयाति । तनु सूक्ष्ममंशुकं वस्त्रं कञ्चुक्यादि । पीनाः परिपुष्टा ये पयोधराः कुचास्तेषु । सङ्गं न प्रयातीति वचनविपरिणामेनान्वयः ॥

[A] विलासनीनां विलासवतीनां वनितानाम् । बाहूनां युग्मानि बाहुयुग्मानि तेषु वलयानि कङ्कणानि अङ्गदानि केयूराणि च वलयाङ्गदानि । सङ्गं सङ्गतिम् । न प्रयान्ति न प्राप्नुवन्ति । पुनर्नितम्बान्येव बिम्बानि नितम्बबिम्बानि तेषु । नवं दुकूलं क्षौमं सङ्गं न प्रयाति । तु पुनः पीनाः पुष्टा ये पयोधराः स्तनाः पीनपयोधरास्तेषु । नवमंशुकं वस्त्रं सङ्गं न प्रयाति । शीतत्वात् सुरतावसरे एतेषां सङ्गः त्यक्त इत्यर्थः । यदुक्तं—'रतिसमये रमणीनां भूषाहानिस्तु भूषणं भवति' । उपेन्द्रवज्रावृत्तानि । तल्लक्षणम्—उपेन्द्रवज्रा जतजास्ततो गौ ॥

**काञ्चीगुणैः काञ्चनरत्नचित्रैर्नो भूषयन्ति प्रमदा नितम्बम् ।**
**न नूपुरैर्हंसरुतं भजद्भिः पादाम्बुजान्यम्बुजकान्तिभाञ्जि ॥ ४ ॥**

काञ्चीति ॥ प्रमदाः स्त्रियः । नितम्बं काञ्चनं स्वर्णं रत्नानि च तैश्चित्रैश्चमत्कृतैः काञ्चीगुणै रसनाकलापैर्नो भूषयन्ति नालंकुर्वन्ति । तथाम्बुजस्य कमलस्य कान्तिं भजन्ति तानि तथोक्तानि । पादाम्बुजानि चरणकमलानि । हंसरुतं मरालविरुतम् । भजद्भिर्नूपुरैर्मञ्जीरैर्न भूषयन्ति । उपजातिवृत्तमेतत् । तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति ॥

[A] प्रमदाः स्त्रियः । काञ्च्या गुणाः काञ्चीगुणास्तैः रसनाकलापैः । नितम्बं कटीप्रदेशं कटीपश्चाद्भागं वा न भूषयन्ति नालंकुर्वन्ति । किं० काञ्चीगुणैः काञ्चनं सुवर्णं च रत्नानि काञ्चनरत्नानि तैः चित्रा विचित्राः काञ्चनरत्नचित्रास्तैः । पुनर्नूपुरैः पादाम्बुजानि चरणकमलानि न भूषयन्ति । किं० नूपुरैः । हंसानां रुतं शब्दः हंसरुतं तत् । भजद्भिः सादृश्यं कुर्वद्भिः । किं० पादाम्बुजानि अम्बुजानि कमलानि तेषां कान्तिं भजन्तीत्यम्बुजकान्तिभाञ्जि तानि । हेमन्ते प्रमदा अतिशीतत्वात् काञ्चीनूपुराणि त्यजन्तीत्यर्थः ॥

**गात्राणि कालीयकचर्चितानि सपत्रलेखानि मुखाम्बुजानि ।**
**शिरांसि कालागुरुधूपितानि कुर्वन्ति नार्यः सुरतोत्सवाय ॥ ५ ॥**

---

1. G नितम्बदेशेषु 2. G °रक्त° 3. L न 4. C[1] B[1] नितम्बाम् 5. G पादाम्बुजालाक्तकशोभितानि 6. G भान्ति 7. G नखाम्बुजानि 8. C[1] भवन्ति ।

गात्राणीति ॥ नार्यः स्त्रियः । सुरतोत्सवाय । गात्राणि शरीराणि । कालीयकेन जायकेन । चर्चितानि लिप्तानि । 'अथ जायकम् । कालीयकं च कालानुसार्यम्' इत्यमरः । मुखाम्बुजानि वदनकमलानि । पत्रलेखा- पत्राङ्गुलिः कपोले कस्तूरिकापत्रावली, तया सहितानि युक्तानि । 'पत्रलेखा पत्राङ्गुलिरिमे समे' इत्यमरः । शिरांसि कालागुरुणा धूपितानि संजातधूपानि सुगन्धान्वितानि कुर्वन्तीत्यर्थः ॥

[A] नार्यः । सुरतोत्सवाय सुरतस्य सम्भोगस्योत्सवो महः सुरतोत्सवस्तस्मै । गात्राणि शरीराणि । कालीयकेन चर्चितानि तानि । कुर्वन्ति । 'कालीयकं तु जायकं यक्षधूपो बहुरूपः' इत्यभिधानचिन्तामणौ । पुनर्मुखान्येवाम्बुजानि कमलानि तथा तानि । पत्रलेखा-मण्डनक्रिया, तया सहितानि सपत्रलेखानि । कुर्वन्ति । पुनः शिरांसि शीर्षाणि । कालागुरुभिः कृष्णागुरुभिः । धूपितानि धूपयुक्तानि । कुर्वन्तीति सर्वत्र योज्यम् । एभिः सुरतरतिरधिका भवन्तीत्यर्थः ॥

**रतिश्रमक्षामविपाण्डुवक्त्राः[1] संप्राप्तहर्षाभ्युदयास्तरुण्यः[2] ।**
**हसन्ति नोच्चैर्[3]दशनाग्रभिन्नान्[4]प्रपीड्यमानानधरानवेक्ष्य ॥ ६ ॥**

रतीति ॥ रतिश्रमेण सुरतश्रमेण क्षामं कृशं विपाण्डु विपाण्डुवर्णं वक्त्रं यासां तास्तथोक्ताः । संप्राप्तो हर्षस्यानन्दस्याभ्युदयो याभिस्तास्तथोक्ताः । तरुण्यः कामिन्यः । दशनानां रदनानामग्रैरग्रभागैर्भिन्नाः क्षतास्तथोक्तान् । अत एव प्रपीड्यमानानधरा- नोष्ठान् । अवेक्ष्य दृष्ट्वा । उच्चैरुच्चैःस्वरेण । न हसन्ति हास्यं न कुर्वन्तीत्यर्थः । उच्चैर्हसनेन तेऽधिकं पीड्यन्त इति भावः ॥

[A] च पुनः । तरुण्यः युवतयोः । हर्षस्याऽभ्युदय आधिक्यं तम् । प्राप्ता अपि पीड्यमानान् पीडां कुर्वाणान् । अधरानधरोष्ठान् । अवेक्ष्य दृष्ट्वा । उच्चैरतिशयेन स्पष्टं वा । न हसन्ति न हास्यं कुर्वन्ति पीडाधिक्यात् । कीदृशानधरान् । दशनानां दन्ता नामग्रास्तैर्भिन्ना विदीर्णा तान् । भर्तृभिरिति योज्यम् । किं० तरुण्यः रतेः संभोगस्य योऽसौ श्रमः खेदो रतिश्रमस्तेन क्षामं कृशं विशेषेण पाण्डु श्वेतं च वक्त्रं मुखं यासां ताः ॥

**पीनस्तनोरःस्थल[5]भाग[6]शोभामासाद्य तत्पीडनजातखेदः ।**
**तृणाग्रलग्नैस्[7]तुहिनैः पतद्भिराक्रन्दतीवोषसि शीतकालः ॥ ७ ॥**

पीनेति ॥ पीनौ पुष्टौ स्तनौ यत्र तादृशो य उरःस्थलभागस्तस्य शोभाम् । आसाद्य प्राप्य । तत्पीडनेन जातः संजातः खेदो दुःखं यस्य स तथोक्तः शीतकालः । पतद्भिः प्रपतद्भिः । अत एव तृणाग्रे तृणप्रान्ते लग्नानि संलग्नानि तैस्तथोक्तैः । तुहिनैस्तुषारैः । उषसि प्रभाते । आक्रन्दतीवेत्युत्प्रेक्षा ॥

---

1. L °क्रान्तविपाण्डुगण्डाः 2. L प्राप्ताश्च हर्षाभ्युदयं, प्राप्तातिहर्षाभ्युदये G. प्राप्तेऽपि हर्षाभ्युदये 3. G नीचैः 4. C प्रभिन्नरागान् , अव्यक्तरागान् 5. L. °उरुस्थल° 6. G °भार° 7. G लग्नैः ।

[A] उषसि प्रभाते शीतकालः। पतद्भिस्तुहिनैर्हिमैः। आक्रन्दतीव रोदितीव। किं० तुहिनैः। तृणाग्रेषु लग्नानि तैः। आक्रन्दने हेतुमाह। पीनस्तनौ यत्र तत् पीनस्तनम्, ईदृशं यदुरःस्थलं तस्य भागोन्तरालप्रदेशः पीनस्तनोरःस्थलभागस्तस्य शोभा ताम्। आसाद्य प्राप्य तत्र वासं लब्ध्वेत्यर्थः। उष्णकालाद्रिपोः पलायमानः शीतकालोऽन्यत्रालब्धस्थानः स्तनान्तरालदेशे न्यवसत्।

उक्तं च—मध्याह्ने हरितो हुताशनमुचः कामोऽपि वामभ्रुवा, पार्टीरद्रवशीतलस्तनतटीमासाद्य (?) पर्णाकेशरिणोऽपि केशरतटीप्रान्तेषु संशेरते (?)। श्यामङ्गता न मुचति तरवो रवौदामिव (?)॥

ततः शीतकालेऽङ्गस्थौल्यात् स्तनावपि स्थूलौ जातौ। तदा तन्मध्यभागपीडनं जातं, तेन जातखेदः। अथवा कठोरस्तनयुक्तहृदयप्रदेशे शोभां सारूप्यं लब्ध्वा शीतकालस्य वर्णः पाण्डुरोऽस्ति, अतिस्थूलौ स्तनावपि पाण्डुरौ भवतः। यदा नायकेन पीडनं कृतं, तदा पाण्डुरस्थानेऽरुणता जाता। तदा सारूप्यभङ्गाज्जातखेदः सन् रोदितीव। अनेन पद्मिन्याश्चतुर्थ्यासिकसंभोगो वर्णितः। नो चेदेवं तदाऽर्थान्तरन्यासः। शीतकालः स्वयं यदा शीतपीडनो जातस्तदोष्णस्तनमण्डलं वक्षस्थलमाश्रित्य स्थितः पश्चात्तत्पीडनजातखेदः। तयोः पीनस्तनयोः पीडनं कान्तकरोद्भूतं तत्पीडनं तेन जातः खेदो यस्य सः। यत्र मया शोभा प्राप्तेत्युत्पन्नखेदः। अथवा पीनस्तनोरःस्थलभागेऽत्युष्णत्वात्सर्वजनहर्षप्रकर्षजनिकां शोभामासाद्य, तत्पीडनेन जातः खेदो यस्य सः। यथा कस्यचिद्राज्ये येन कृत्वा लोकाः सुखिनो भवन्ति तस्य पीडनेन राजापि खेदं प्राप्नोति। तथैव शीतकाले पीनस्तनैः कृत्वा लोकाः सुखिनो भवन्ति पश्चात्तत्पीडनजातखेदः। अथवा शीतकाल उषसि प्रभाते पतद्भिस्तुहिनैः आक्रन्दतीव। किं० तुहिनैः तृणाग्रलग्नैः। किं० पीनस्तनोरःस्थलभागशोभामासाद्य पीनस्तनोरःस्थलस्य योऽसौ भागः प्रदेशस्तस्य या शोभा तथा तामासाद्य प्राप्य। किं० शीतकालः तत्पीडनजातखेदः। तेषां तुहिनानां पीडनं तेन जातः खेदो यस्य सः। प्रभाते सूर्यातपेन तुहिनविन्दवः पीडिता सन्तः क्षरन्ति यैस्तुहिनैः कृत्वा पीनस्तनोरःस्थलभागवत् शोभां प्राप्ता मया तेषां तुहिनानां पीडनं जातम्। तेन दुःखेन शीतकालो रोदितीति भावः॥

**प्रभूतशालिप्रसवैश्चितानि मृगाङ्गनायूथविभूषितानि।**
**मनोहरक्रौञ्चनिनादितानि सीमान्तराण्युत्सुकयन्ति चेतः॥ ८॥**

(प्रभूत[1], प्रसवै[2], विभूषितानि[3])

**प्रभूतेति**॥ प्रभूताः संभूता ये शालिप्रसवा धान्यानि तैश्चितानि व्याप्तानि। मृगाङ्गनानां हरिणरमणीनां यूथैः समुदायैर्विभूषितानि शोभितानि। मनोहराः सुन्दरा ये क्रौञ्चाः पक्षिविशेषास्तैर्निनादितानि प्रतिनादितानि। सीमान्तराणि सीम्नां प्रान्तभागाः। चेतः अन्यस्येति शेषः। उत्सुकयन्त्युत्कण्ठयन्तीत्यर्थः॥

---

1. G प्रसूति° 2. G °प्रचयैः 3. G °विलासितानि।

[A] सीमाया अन्तराणि सीमान्तराणि । चेतः उत्सुकयन्ति उत्सुकं कुर्वन्ति । किं० सीमान्तराणि । प्रभूताः प्रचुरा ये शालयस्तेषां प्रसवा उत्पत्तयस्तथा तैश्चितानि व्याप्तानि । पुनः कीदृशानि । मनोहरक्रौञ्चनिनादितानि । मनोहरा ये क्रौञ्चाः क्रौञ्चपक्षिणस्तेषां निनादः शब्दो येषु तानि । पुनः कीदृशानि । मृगाङ्गनानां हरिणीनां यूथेन समूहेन विभूषितानि । उपजातिवृत्तानि ॥

**प्रफुल्लनीलोत्पलशोभितानि सोन्मादकादम्बविभूषितानि ।**
**प्रसन्नतोयानि सुशीतलानि सरांसि चेतांसि हरन्ति पुंसाम् ॥९॥**

प्रफुल्लेति ॥ प्रफुल्लैरुत्फुल्लैर्नीलोत्पलैरिन्दीवरैः शोभितानि भूषितानि । सोन्मादरुन्मादसहितैः कादम्बैः कलहंसैर्विभूषितानि । प्रसन्नं निर्मलं तोयं जलं येषु तानि तथोक्तानि । सुशीतलानि सरांसि सरोवराणि । पुंसां पुरुषाणाम् । चेतांस्यन्तःकरणानि । हरन्तीत्यर्थः ॥

[A] ईदृशानि सरांसि तडागानि । पुंसां पुरुषाणाम् । चेतांसि चित्तानि । हरन्ति वशीकुर्वन्ति । किं० प्रवालाश्च नीलोत्पलानि च प्रवालनीलोत्पलानि तैर्भूषितान्यलंकृतानि । पुन० हंसैः सह वर्त्तमानाः सहंसाः, सहंसा ये कादम्बाः कलहंसाः सहंसकादम्बास्तैर्विघट्टितानि स्पृष्टानि युक्तानि । पु० प्रसन्नानि निर्मलानि तोयानि सलिलानि येषु तानि । पुन० कथं० सशैवलानि शैवलयुक्तानि । उपेन्द्रवज्रावृत्तम् ।

**पाकं व्रजन्ती हिमजातशीतैराधूयमाना सततं मरुद्भिः ।**
**प्रिये प्रियङ्गुः प्रियविप्रयुक्ता विपाण्डुतां याति विलासिनीव ॥१०॥**

पाकमिति ॥ हे प्रिये, हिमेन तुषारेण जातैः संजातैः शीतैः । पाकं परिपाकम् । व्रजन्ती गच्छन्ती । मरुद्भिर्वायुभिः । सततं निरन्तरम् । आधूयमाना कम्पायमाना । प्रियङ्गुर्गोवन्दिनी लता । 'श्यामा तु महिलाह्वया । लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली' इत्यमरः । प्रियेण कान्तेन विप्रयुक्ता । विलासिनीव स्त्रीव । विपाण्डुतां विशेषेण पाण्डुताम् । याति गच्छतीत्यर्थः ॥

[A] हे प्रिये, प्रियङ्गुःवृक्षः । विशेषेण पाण्डुर्विपाण्डुस्तस्य भावो विपाण्डुता ताम् । याति प्राप्नोति । किं कुर्वती । हिमशीतपातैः पाकं व्रजन्ती । हिममयं यच्छीतं हिमशीतं तस्य पाताः तैः परिपक्वभावं प्राप्तवती पच्यमाना भवतीत्यर्थः । पुनः किं कुर्वाणा प्रियङ्गुः । मरुद्भिर्वातैः । सततं निरन्तरम् । धूयमाना कम्पयमाना । तत्र दृष्टान्तमाह । प्रियविप्रयुक्ता भर्तृवियोगिनी विलासिनी ललनेव । यथा विप्रयुक्ता विलासिनी विपाण्डुतां याति तथेयम् ॥

---

1. G प्रभूत,° A, प्रवाल° 2. G °भूषितानि 3. L शरारिकादम्बविघट्टितानि, शरादिका°, सहंसका° 4. G प्रफुल्ल° 5. G सशैवलानि 6. L °पातशीतैः, °सङ्गशीतैः, °शीतपातैः

**पुष्पासवामोदसुगन्धिवक्त्रो निःश्वासवातैः सुरभीकृताङ्गः ।**
**परस्पराङ्गव्यतिरिक्तशायी शेते जनः कामरसानुविद्धः ॥ ११ ॥**

पुष्पेति ॥ पुष्पासवस्य पुष्पनिर्गतासवस्य पुष्पयुक्तासवस्य आमोदेन सौगन्ध्येन सुगन्धि सुरभि वक्त्रं वदनं यस्य स तथोक्तः । निःश्वासवातैः श्वासोच्छ्वासपवनैः । सुरभीकृतमङ्गं शरीरं यस्य तथोक्तः । कामरसेन कन्दर्परसेनानुविद्धो व्याप्तः । अत एव परस्परस्यान्योन्यस्याङ्गेन व्यतिरिक्तं संलग्नमिति तथा शेते स तथोक्तः जनो लोकः । शेते निद्रातीत्यर्थः ॥

[A] कामरसानुविद्धः कामरागेणानुविद्धो व्याप्तः जनः शेते स्वपितीत्यर्थः ॥ किं० जनः । रतेर्योऽसावुत्सवो हर्षप्रकर्षजनकः कर्पूरमिश्रितनागवल्लीदलानां भक्षणं तस्यामोदेन परिमलेन सुगन्धि वक्त्रं यस्य सः । पु० निःश्वासवातैः सुरभीकृताङ्गः । निःश्वासस्य वाता निःश्वासवातास्तैः सुरभीकृतं अङ्गं यस्य सः । पुनः° परस्पराङ्गप्रतिभिन्नदेहः परस्परस्याङ्गेन प्रतिभिन्नो व्याप्तो देहो यस्य सः । प्रतिः वीप्सायाम् । 'परस्पराङ्गव्यतिरिक्तशायी' इत्यपि पाठः । परस्परस्याङ्गेन व्यतिरिक्तं मिलितं भिन्नं वा यथा स्यात्तथा शेते इत्येवंशीलः परस्पराङ्गव्यतिरिक्तशायी । 'एकत्रशायी भिन्नशायी चेति विचार्य्यम्' ॥

**दन्तच्छदैः सव्रणदन्तचिह्नैः स्तनैश्च पाण्यग्रकृताभिलेखैः ।**
**संसूच्यते निर्दयमङ्गनानां रतोपयोगो नवयौवनानाम् ॥१२॥**

दन्तच्छदैरिति ॥ नवं नूतनं यौवनं तारुण्यं यासां तासाम् । अङ्गनानां वनितानाम् । सव्रणाण्याघातयुक्तानि दन्तानां दशनानां चिह्नानि लक्ष्माणि येषु तैस्तथोक्तैः । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । दन्तच्छदैरधरैः । पाण्यग्रैर्नखैः कृतोऽभिलेखो लेखनं येषु तैस्तथोक्तैः । स्तनैः कुचैश्च । निर्दयं दयारहितं यथा भवति तथा । रतोपयोगः संभोगावाप्तिः । संसूच्यते सम्यग्ज्ञाप्यत इत्यर्थः ॥

[A] स्त्रीणां दन्तच्छदैरधरैः । च पुनः । स्तनैः । निर्दयं यथा स्यात्तथा । संसूच्यते रतोपभोगः सुरतोपभोगः कथ्यते प्रकटीक्रियते । किं० सव्रणदन्तचिह्नैः सव्रणानि पीडायुक्तानि दन्तानां रदानां चिह्नानि येषु ते तैः । कीदृशैः स्तनैः । पाण्यग्रकृताभिलेखैः पाण्यग्रैः नखैः कृतः अभिलेखः प्रहारः नखचिन्हरूपो येषु ते तैः । कथं० सुन्दरीणाम् । नवं प्रत्यग्रं यौवनं यासां तास्तथा तासाम् । उपजातिवृत्तम् ॥

**काचिद्विभूषयति दर्पणसक्तहस्ता बालातपेषु वनिता वदनारविन्दम् ।**
**दन्तच्छदं प्रियतमेन निपीतसारं दन्ताग्रभिन्नमवकृष्य निरीक्षते च ॥ १३ ॥**

---

1. G रत्युसवामोद° 2. G °कृतान्तः 3. L K °व्यतिसङ्ग° C[1] B B[1], C °व्यतिसक्त°, °व्यतिषिक्त°, °प्रतिभिन्नदेहः 4. G कामशरानुविद्धः 5. L दन्तविघातचिह्नैः 6. G. पीनैस्सुरताभिलाषैः 7. G रतोपभोगो 8. G °युक्त° 9. G बाला विलोलचिकुरम 10. G प्रियतमैश्च 11. G अपकृष्य, अनुकृष्य

**काचिदिति** ॥ दर्पण आदर्शे सक्तः संसक्तो हस्तः करो यस्याः सा तथोक्ता । 'दर्पणे मुकुरादर्शौ' इत्यमरः । काचिद्वनिता स्त्री । बालातपेषु कोमलोष्णेषु । स्थित्वेति शेषः । वदनारविन्दं मुखकमलम् । विभूषयति अलंकरोतीत्यर्थः । किंच । प्रियतमेन कान्तेन । निपीतः सारो रसो यस्य तं तथोक्तम् दन्ताग्रै रदनाग्रैर्भिन्नं खण्डितम् । दन्तच्छदमोष्ठम् । अवकृष्याकृष्य निरीक्षते । वसन्ततिलकावृत्तमेतत् । लक्षणं तु पूर्वमुक्तम् ॥

[A] काचिद्वनिता नारी । बालातपेषु बालघर्मेषु । वदनारविन्दं वदनमेव मुखमेवारविन्दः कमलम् । विभूषयति शोभायमानं करोति । भर्तृसंभोगाधिक्यात्पीतत्वमापन्नं वक्त्रं बालातपस्यारुणत्वयोगादरुणत्वमापादयतीत्यर्थः । कथं० व० दर्शे दर्पणे सक्तो लग्नो हस्तो यस्याः सा । पुनर्दन्तच्छदमधरम् । अपकृष्य अन्तर्दर्पणमध्ये । निरीक्षते पश्यति । भर्तृखण्डितस्याधरस्यादर्शतले निरीक्षणं करोति । कथं० दन्त० । प्रियतमेन भर्त्रा निपीतः सारो यस्य तम् । दन्तानामग्राणि दन्ताग्राणि तैर्भिन्नंविदारितं तम् ॥

**अन्या[1] प्रकामसुरतश्रमखिन्न[2]देहा रात्रि[3]प्रजागरविपाटलनेत्र[4]पद्मा ।**
**स्रस्तांसदेश[5]लुलिताकुल[6]केशपाशा[7] निद्रां प्रयाति[8] मृदुसूर्यकराभितप्ता[9][10] ॥ १४ ॥**

अन्येति ॥ प्रकाममत्यन्तं सुरतश्रमेण संभोगक्लेशेन खिन्नः खेदान्वितो देहः शरीरं यस्याः सा तथोक्ता । रात्रौ निशाया यः प्रजागरो जागरणं तेन विपाटले विशेषेण पाटलवर्णे नेत्रपद्मे नयनारविन्दे यस्याः सा तथोक्ता । स्रस्तो विशकलितोऽसदेशः स्कन्धप्रदेशः तत्र लुलितोऽत्यन्तमाकुलो व्याकुलः केशपाशः कवरीबन्धो यस्याः सा तथोक्ता । मृदुभिः कोमलैः सूर्यकरैस्तरणिकिरणैरभितप्ता । अन्या काचित्स्त्री निद्रां प्रयाति प्राप्नोति[11] ॥

**निर्माल्यदाम परिमुक्त[12]मनोज्ञगन्ध[13] मूर्ध्नोऽपनीय घननीलशिरोरुहान्ताः[14] ।**
**पीनोन्नत[15]स्तनभरानतगात्रयष्ट्यः कुर्वन्ति केशरचनाम[16]परास्तरुण्यः ॥ १५ ॥**

निर्माल्येति ॥ घनवन्मेघवद्घनाः संकीर्णा नीलाः कृष्णवर्णाः शिरोरुहान्ताः केशग्रान्ता यासां तास्तथोक्ताः । पीनाः पुष्टा उन्नताश्च ये स्तनाः कुचास्तेषां भरेण भारेण नता नम्रा गात्रयष्टयः शरीरलता यासां तास्तथोक्ताः ।अपरा अन्याः। तरुण्यो युवत्यः

---

1. L K अन्याः 2. L K °भिन्नदेहाः 3. B नक्त°, नक्तम् 4. L °नेत्रयुग्माः K °नेत्रपद्माः 5. G शय्यान्त°, शय्यान्तरेषु 6. G °ललिता° 7. L K °पाशाः 8. L K प्रयान्ति 9. K L °भितप्ताः, दिननाथकराभितप्ताः 10. तु. रामा. ३, १६, २५ ✓ 11. इत ऊर्ध्वं A मूलकोषपाठस्त्रुटितः 12. G °भुक्त° 13. L °परिभूत°, °गन्धान् 14. G °न्तात 15. G पीनस्तनोल्लसित° 16. G अबलाः

परिमुक्तस्त्यक्तो मनोज्ञः सुन्दरो गन्धो येन तत्तथोक्तम् । निर्माल्यदाम निर्माल्यभूतां स्रजम् । मूर्ध्नः शिरसः । अपनीय दूरीकृत्य । केशानां कुन्तलानां रचनां कुर्वन्ति ॥

**अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं हर्षान्विता विरचिताधरचारुशोभा ।**
**कूर्पासकं परिदधाति नखक्षताङ्गी व्यालम्बिनीललुलितालककुञ्चिताक्षी॥१६॥**

अन्येति ॥ प्रियेण कान्तेन । परिभुक्तं संभुक्तम् । गात्रं शरीरम् । अवेक्ष्य दृष्ट्वा । हर्षेणानन्देनान्विता युक्ता । विरचिता कृताधर ओष्ठे चारुशोभा नखकृतरेखा दन्तक्षतैर्वा यस्याः सा तथोक्ता । नखैर्नखरैः क्षतं कारितमङ्गं शरीरं यस्याः सा तथोक्ता । व्यालम्बिभिर्नीलैर्लम्बद्भिर्नीलवर्णैर्ललितैः सुन्दरैरलकैः कुन्तलैः कुञ्चिते आकुञ्चिते अक्षिणी यस्याः सा तथोक्ता । अन्या स्त्री । कूर्पासकं चोलम् । 'चोलः कूर्पासकोऽस्त्रियाम्' इत्यमरः । परिदधाति धत्त इत्यर्थः ॥

**अन्याश्चिरं सुरतकेलिपरिश्रमेण खेदं गताः प्रशिथिलीकृतगात्रयष्ट्यः ।**
**संहृष्यमाणपुलकोरुपयोधरान्ता अभ्यञ्जनं विदधति प्रमदाः सुशोभाः ॥१७॥**

अन्या इति ॥ चिरं चिरकालं या सुरतकेलिः संभोगक्रिया तया यः परिश्रमः क्लेशस्तेन । खेदं गताः प्राप्ताः । अत एव प्रकर्षेण शिथिलीकृता गात्रयष्टयो यासां तास्तथोक्ताः । संहृष्यमाणः पुलको रोमाञ्चो यस्मिंस्तादृश उरुः पीनश्च पयोधरान्तः पयोधरप्रान्तो यासां तास्तथोक्ताः । सुष्ठु समीचीना शोभा यासां तास्तथोक्ताः । अन्याः प्रमदाः स्त्रियः । अभ्यञ्जनमभ्यङ्गं सुगन्धतैलादिना । विदधति कुर्वन्तीत्यर्थः ॥

**बहुगुणरमणीयो योषितां चित्तहारी परिणतबहुशालिव्याकुलग्रामसीमा ।**
**सततमतिमनोज्ञः क्रौञ्चमालापरीतः प्रदिशतु हिमयुक्तः काल एषः सुखं वः ॥१८॥**

बहुगुणेति ॥ बहुगुणं रमणीयः सुन्दरः । योषितां स्त्रीणाम् । चित्तहारी । परिणतैः परिपक्वैर्बहुभिः शालिभिः व्याकुलः ग्रामसीमा ग्रामान्ताः प्रान्ता यस्मिन्स तथोक्तः । सततं निरन्तरम् । अतिमनोज्ञोऽतिसुन्दरः । क्रौञ्चमालाभिः क्रौञ्चपङ्क्तिभिः परीतो युक्तः । हिमयुक्त एष कालो हेमन्तकालः वः सुखं प्रदिशतु । ददात्वित्यर्थः ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कवि-श्रीकालिदासकविराग्रणीकृतावृतुसंहारे महाकाव्ये हेमन्तवर्णनं नाम चतुर्थः सर्गः

---

**1.** G प्रविभक्तम् **2.** B[1] °गण्डशोभा L °रागगण्ड° **3.** B[1] B C रक्तांशुकम् L कूर्पासकम् **4.** B[1] B नवं नताङ्गी **5.** L C व्यालम्बिनीविलुलितालककुञ्चिताक्षी **6.** L B B[1] खेदम **7.** L संपीड्यमानविपुलोरुवयोधरार्ताः B K संपीड्यमानविपुलो,° संदृश्यमानविपुलो° **8.** K प्रत्यञ्जनम्, नेत्राञ्जनम् **9.** L सुशोभम् **10.** G इति बहुगुणरमणीयः **11.** L C[1] C °सीमः **12.** G विनिपतिततुषारः **13.** B[1] C क्रौञ्चनादोपगीतः L १दोपगीतः **14.** G उपदिशतु सुखं वः काल एषोऽतिरम्यः **15.** G त्वेष कालः। **16.** L प्रियम

अथ क्रमप्राप्तं शिशिरं वर्णयति—

[1]प्ररूढशाल्यंशुचयैर्मनोहरं [2]क्वचित्स्थितक्रौञ्चनिनाद[3]राजितम् ।
प्रका[4]मकामं प्रमदाजनप्रियं [5]वरोरु कालं शिशिराह्वयं शृणु ॥ १ ॥

प्ररूढेति ॥ वरावुत्कृष्टावूरू जङ्घे यस्यास्तस्याः संबोधने हे वरोरु । प्ररूढानां प्रवृद्धानां शालीनामंशुचयैर्मनोहरम् । क्वचित्पुस्तके 'प्ररूढशालीक्षुचयावृतक्षितिम्' इति पाठः । स तु रूढ एव । तत्र प्ररूढानां प्रवृद्धानां शालीनां धान्यानामिक्षूणां च चयैः समूहैरावृताच्छादिता क्षितिः पृथ्वी यस्मिन्निति समासः । क्वचित्कुत्रचिद्वृक्षशाखायां स्थितानामुपविष्टानां क्रौञ्चानां पक्षिविशेषाणां निनादैर्विरुतै राजितं शोभितं तं तथोक्तम् । प्रकाममत्यन्तं कामो यस्मिंस्तं तथोक्तम् । प्रमदाजनस्य स्त्रीजनस्य प्रियमिष्टम् । शिशिर इत्याह्वय आख्या यस्य तं तथोक्तम् । कालं समयम् । शृणु आकर्णयेत्यर्थः । वंशस्थवृत्तमेतत् । तल्लक्षणं तु पूर्वमुक्तम् ॥

निरुद्धवातायनमन्दिरोदरं हुताशनो भानुमतो गभस्तयः ।
गुरूणि वासांस्यबलाः सयौवनाः प्रयान्ति काले[6]ऽत्र जनस्य सेव्यताम् ॥ २ ॥

निरुद्धेति ॥ अत्र काले शिशिरकाले । निरुद्धान्यवरुद्धानि वातायनानि गवाक्षा यस्य तादृशस्य मन्दिरस्योदरं गर्भदेशः 'वातायनं गवाक्षः स्यात्' इत्यमरः । हुताशनोऽग्निः । भानुमतः सूर्यस्य गभस्तयः किरणाः । गुरूणि वासांसि च वस्त्राणि । सयौवनास्तारुण्यसहिता अबलाः स्त्रियः । जनस्य लोकस्य । सेव्यतां प्रयान्ति प्राप्नुवन्तीति वचनविपरिणामेनान्वयः ॥

न चन्दनं चन्द्रमरीचिशीतलं न हर्म्यपृष्ठं शरदिन्दुनि[7]र्मलम् ।
[8]न वायवः सान्द्रतुषारशीतला जनस्य चित्तं रमयन्ति सांप्रतम् ॥ ३ ॥

नेति ॥ सांप्रतमिदानीम् । चन्द्रमरीचय इव चन्द्ररश्मय इव शीतलं शिशिरं चन्दनम् । जनस्य चित्तं न रमयति । तथा शरदिन्दुवन्निर्मलं स्वच्छम् । हर्म्यपृष्ठं प्रासादतलम् । जनस्य चित्त न रमयति । तथा सान्द्रेण घनेन तुषारेण हिमेन शीतलाः शिशिराः । वायवः पवनाः अपि । जनस्य चित्तं न रमयन्तीत्यर्थः ॥

तुषारसंघातनिपातशीतलाः शशाङ्क[9]भाभिः शिशिरी[10]कृताः पुनः ।
विपाण्डुतारागणजि[11]ह्मभूषिता जनस्य सेव्या न भवन्ति रात्रयः ॥ ४ ॥

तुषारेति ॥ तुषारसंघातस्य हिमसमूहस्य निपातेन शीतलाः । पुनः शशाङ्कस्य

1. L प्ररूढशालिप्रचया । तु० शिशिरवर्णनं माघे ६,२–७९ ; सुभाषितावल्याम् १८४७–६९ K प्ररूढशालीक्षुं, प्ररूढशालिप्रचयैः G प्ररूढशाली क्षुचयावृतक्षितिम् 2. L निद्रोत्थित°, C सुस्थस्थित°, क्षितिस्थित°, क्वचित्स्थितम् 3. C °शोभितम् 4. C1 प्रमोदहेतुम् 5. G प्रियेऽथ 6. L अद्य 7. L B B[1] निर्मलम् 8. B[1] G °शीतला 9. G °रोचिः °शोभाः 10. B[1] G शिशिरीकृता 11. G चारुभूषणा B चारुभूषिता

चन्द्रस्य भाः कान्तयस्ताभिः शिशिरीकृताः । एतेन शैत्याधिक्यं सूचितम् । विपाण्डुना पाण्डुरवर्णेन तारागणेन नक्षत्रसमूहेन जिह्मं वक्रं यथा भवति तथा भूषिताः शोभिताः । रात्रयः शर्वर्यः । जनस्य लोकस्य । सेव्याः सेवितुमुपभोक्तुं योग्या न भवन्तीत्यर्थः ॥

गृहीतताम्बूलविलेपनस्रजः सुखासवामोदितवक्त्रपङ्कजाः ।
प्रकामकालागुरुधूपवासितं विशन्ति शय्यागृहमुत्सुकाः स्त्रियः ॥ ५ ॥

गृहीतेति ॥ गृहीतास्ताम्बूलं च विलेपनं च कस्तूर्यादिस्रजः कुसुममालाश्च याभिस्तास्तथोक्ताः । सुखयतीति सुखः, सुखकरो य आसवो मधु तेनामोदितं सुगन्धितं वक्त्रपङ्कजं मुखकमलं यासां तास्तथोक्ताः । उत्सुका उत्कण्ठिताः स्त्रियः । प्रकाममत्यन्तं कालागुरोः कृष्णागुरोर्धूपेन वासितम् । शय्यागृहं शय्यामन्दिरम् । विशन्ति प्रविशन्तीत्यर्थः ॥

कृतापराधान्बहुशोऽपि तर्जितान्सवेपथून्साध्वसलुप्तचेतसः ।
निरीक्ष्य भर्तॄन्सुरताभिलाषिणः स्त्रियोऽपराधान्समदा विसस्मरुः ॥ ६ ॥

कृतेति ॥ समदा मदसहिताः । स्त्रियः कामिन्यः । कृतोऽपराधो यैस्तथोक्तान् । अत एव बहुशो बहुवारमपि तर्जितान् वेपथुभिः कम्पैः सहिता युक्तास्तांस्तथोक्तान् । साध्वसं भयम् । 'साध्वसं भयम्' इत्यमरः । पूर्वकृतापराधमूलकं तेन लुप्तं विनष्टं चेतश्चित्तं येषां ते तथोक्तान् भर्तॄन्प्रियान् सुरताभिलाषिणः संभोगाभिलाषिणः । निरीक्ष्य वीक्ष्य । अपराधान्पूर्वकृतान् । विसस्मरुः । अपराधस्मरणेन विप्रियं नोचुरित्यर्थः । वंशस्थवृत्तमेतत् । तल्लक्षणं तूक्तम् ॥

प्रकामकामैर्युवभिः सनिर्दयं निशासु दीर्घास्वभिरामिताश्चिरम् ।
भ्रमन्ति मन्दं श्रमखेदितोरसः क्षपावसाने नवयौवनाः स्त्रियः ॥ ७ ॥

प्रकामकामैरिति ॥ प्रकाममत्यन्तं कामोऽभिलाषो येषां तैस्तथोक्तैः । कामातुरैरित्यर्थः । युवभिस्तरुणैः । दीर्घासु निशासु रात्रिषु । चिरं चिरकालम् । निर्दयतया दयाभावेन रहितं यथा भवति तथा । अभिरामिताः क्रीडिताः । अत एव श्रमेण परिश्रमेण खेदितं खिन्नमुरो हृदयं यासां तास्तथोक्ताः । नवयौवनास्तरुण्यः स्त्रियः क्षपायाः क्षणदाया अवसानं समाप्तिस्तस्मिन् । प्रभात इत्यर्थः । मन्दं मन्थरम् भ्रमन्ति भ्रमणं कुर्वन्तीत्यर्थः ॥

---

1. G B पुष्पासव° 2. G B °वासिताम् 3. G B[1] शय्याम् 4. G B उत्सुकस्त्रियः 5. G बहुधाभितर्जितान्, L बहुशो वितर्जितान्, °अभितर्जितान्, अधितर्जितान् 6. L G B °मन्द° 7. G शयने 8. G B न 9. L सुरतैश्च निर्दयम् 10. °स्वतिपीडिताः K °स्वभिभाविताः, °स्वभिभाविता भृशम्, गाढं दयितश्चिरदृढम् 11. C C भृशम् 12. G B भवन्ति K धमन्ति 13. G अमन्थम्, मन्द° 14. G °खेदितोरवः °मोदितोरसः, °स्वेदितोरवः

मनोज्ञ[1]कूर्पासकपीडितस्तनाः सराग[2]कौशेयकभूषितोरसः ।
निवेशितान्तःकुसुमैः शिरोरुहैर्विभूषयन्तीव हिमागमं स्त्रियः ॥ ८ ॥

मनोज्ञेति ॥ मनोज्ञेण सुन्दरेण कूर्पासकेन चोलेन पीडिताः स्तना यासां तास्तथोक्ताः । सरागं रागसहितं यत्कौशेयमेव कौशेयकं कृमिकोशोत्थं वस्त्रं तेन भूषितं शोभितमुरो हृदयं यासां तास्तथोक्ताः स्त्रियः । निवेशितानि निविष्टान्यन्तरन्तर्भागे कुसुमानि येषां ते तैस्तथोक्तैः । शिरोरुहैः केशैः । हिमागमं शीतकालं विभूषयन्तीवेत्युत्प्रेक्षा ॥

पयोधरैः कुङ्कुमरागपिञ्जरैः सुखोपसेव्यैर्नवयौ[3]वनोष्मभिः ।
विला[4]सिनीभिः परिपीडितोरसः स्वपन्ति शीतं परिभूय कामिनः ॥ ९ ॥

पयोधरैरिति ॥ विलासिनीभिः कुङ्कुमस्य केसरस्य रागेण पिञ्जरैः पीतवर्णैः । सुखेनोपसेव्या उपभोग्यास्तैस्तथोक्तैः । नवो नूतनो यौवनस्य तारुण्यस्योष्मौष्ण्यं येषु तैस्तथोक्तैः । पयोधरैः कुचैः । परिपीडितमुरो हृदयं येषां ते तथोक्ताः । कामिनो विलासिनः । शीतं हिमम् । परिभूयाभिभूय । स्वपन्ति निद्रां कुर्वन्तीत्यर्थः ॥

सुगन्धिनिश्वासविकम्पितो[6]त्पलं मनोहरं कामरति[7]प्रबोधकम् ।
निशासु हृष्टाः सह कामिभिः स्त्रियः पिबन्ति मद्यं मदनीयमुत्तमम् ॥ १० ॥

सुगन्धीति ॥ हृष्टा हर्षिताः । स्त्रियो युवत्यः । सुगन्धिना सुरभिणा निश्वासेन विकम्पितमुत्कम्पितमुत्पलं कुवलयं यस्मिंस्तत्तथोक्तम् । मनोहरं सुन्दरम् । काममत्यन्तं रतेः सुरतस्य प्रबोधकं प्रबोधजनकम् । मदनीयमुन्मादकरम् । उत्तममुत्तमजातीयम् । मद्यं मधु । निशासु रात्रिषु । कामिभिः प्रियैः सह । पिबन्तीत्यर्थः ॥

अपगतमदरागा योषिदेका प्रभाते कृतं[10]निबिडकुचाग्रा पत्युरालिङ्गनेन ।
प्रियतमपरिभुक्तं वीक्ष[11]माणा स्वदेहं व्रजति शयनवा[12]साद्वासमन्यद्धसन्ती ॥ ११ ॥

अपगतेति ॥ अपगतो मदरागो यस्याः सा तथोक्ता । पत्युः प्रियस्य । आलिङ्गनेन परिरम्भणेन । कृतं निबिडं सान्द्रं कुचाग्रं स्तनाग्रं यस्याः सा तथोक्ता । प्रियतमेन कान्तेन परिभुक्तम् । स्वं देहं निजं शरीरम् । वीक्षमाणा पश्यन्ती । हसन्ती स्मेरानना । एका योषित् स्त्री । प्रभाते प्रातः काले । शयनवासादन्यद्वासं मन्दिरम् । व्रजतीत्यर्थः । मालिनीवृत्तमेतत । लक्षणं तूक्तम् ॥

---

1. L °कुर्पासक°, G B °कूर्पासनिपीडित° 2. G B °कौशयविभूषितोरसः 3. G यौवनोन्नतैः, यौवनोद्भवैः 4. L B C विलासिनीनाम् 5. G B भृशम् । तु. वत्सभट्टिप्रशस्तिः ३३ 6. G °दरम्, विकल्पितोत्पलम् 7. L K B °प्रबोधनम् 8. G कृष्णासु च कामिनो जनाः 9. G B एव 10. C कृतविनतकुचाग्रा, कुचनिबिडकुचा या, कृतविकृतकुचाग्रा 11. C L वीक्ष्यमाणा 12. G शयनगेहाद्वस्त्रमाकर्षयन्ती ।

अगुरुसुरभिधूपामोदितं केशपाशं
गलितकुसुममालं तन्वती कुञ्चिताग्रम् ।
त्यजति गुरुनितम्बा निम्नमध्यावसाना
उषसि शयनमन्या कामिनी चारुशोभा ॥१२॥

अगुर्विति ॥ अगुरोः सुरभिणा सुगन्धिना धूपेनामोदितः संजातसौरभस्तं तथोक्तम् । गलिता स्रस्ता कुसुममाला यस्य तं तथोक्तम् । कुञ्चिताग्रं कुञ्चिता वक्रभावापन्ना अग्रा अग्रभागा यस्य तादृशम् । केशपाशं केशसमूहं तन्वती । गुरुनितम्बा गुरू नितम्बौ यस्याः सा तथोक्ता । निम्नं कृशं मध्यावसानं मध्यप्रान्तो यस्याः सा तथोक्ता । चारुशोभा सुन्दरशोभा । अन्या कामिनी स्त्री । उषसि प्रातःकाले । शयनं पर्यङ्कम् । 'शयनं मञ्चपर्यङ्कपल्यङ्काः' इत्यमरः । त्यजति मुञ्चतीत्यर्थः । क्वचित्पुस्तके 'निम्नमध्यावसन्ना' इति पाठः । तदर्थस्तु निम्नेन मध्येनावसन्ना खिन्नेति निम्नमध्यावसन्ना । 'उषसि' इत्यत्र विवक्षाप्राप्तत्वान्न संहिता । तदुक्तम्—'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥' इति ॥

कनककमलकान्तैः सद्य एवाम्बुधौतैः श्रवणतटनिषक्तैः पाटलोपान्तनेत्रैः ।
उषसि वदनबिम्बैरंससंसक्तकेशैः श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य॥१३॥

कनकेति ॥ सद्य एव तत्कालमेव । अम्बुधौतैरम्बुना जलेन धौतानि प्रक्षालितानि तैः । अत एव कनककमलकान्तैः कनकस्य सुवर्णस्य कमलमम्बुजमिव कान्तैः सुन्दरैर्वदनबिम्बैः । 'चारुताम्राधरोष्ठैः' इति पाठे तु चारवः सुन्दराश्च ते ताम्रा आरक्ताश्च तेऽधरोष्ठाश्च तैः । श्रवणतटे कर्णप्रान्ते निषक्तैर्निषण्णैः । पाटलः पाटलवर्ण उपान्तः प्रान्तो येषां तादृशानि च तानि नेत्राणि लोचनानि तैः । 'लोचनं नयनं नेत्रम्' इत्यमरः । अंसे स्कन्धे संसक्ताः संलग्ना ये केशाः कुन्तलास्तैश्चोपलक्षिता योषितः स्त्रियः । अद्येदानीम् । उषसि प्रातःकाले । गृहमध्ये श्रिय इव लक्ष्म्य इव संस्थिताः ॥

पृथुजघनभरार्ताः किंचिदानम्रमध्याः स्तनभरपरिखेदान्मन्दमन्दं व्रजन्त्यः ।
सुरतसमयवेशं नैशमाशु प्रहाय दधति दिवसयोग्यं वेषमन्यास्तरुण्यः ॥१४॥

1. B[1] G °मोदितान्, G °धूपाशोभितम्, °कुसुमवासामोदितम् 2. B[1] G केशपाशान् 3. B[1] G °मालान् 4. B L धुन्वती कुञ्चिताग्रम्, धुन्वती कुञ्चिताग्रान् 5. G निम्ननाभिः सुमध्या 6. L शयनवासः, C शयनवासम् 7. G चारुशोभा, L K कामशोभा, कामशोभम्, कामशोभाम् 8. L चारुताम्राधरोष्ठैः, चारुबिम्बाधरोष्ठैः 9. G °स्मरदमृत 10. B G °संयुक्त° 11. B G संस्मिता 12. B G °मध्या 13. B G स्तनयुग° 14. B G व्रजन्त्याः 15. B G °समयखेदम् L समयवेशम्, °शयनवेशम् 16. B G अन्यत्, अङ्के 17. L एताः

पृथ्विति ॥ पृथोः स्थूलस्य जघनस्य कट्यग्रभागस्य भरेणार्ताः पीडिताः। 'क्लीबे तु जघनं पुरः' इत्यमरः । किंचिदीषदानम्रं नतं मध्यं यासां तास्तथोक्ताः। स्तनानां कुचानां भरेण भारेण यः परिखेदः श्रमस्तस्मात्। मन्दमन्दं मन्थरम् व्रजन्त्यो गच्छन्त्यः । अन्यास्तरुण्यः कामिन्यः । निशि भवं नैशम् । सुरतसमये संभोगकाले यो वेश आकारस्तम् । आशु झटिति । प्रहाय त्यक्त्वा । दिवसयोग्यं वेषं दधतीत्यर्थः ॥

**नखपदचितभागान्वीक्षमाणाः स्तनाग्रानधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः।**
**अभिमतरसमेतं नन्दयन्त्यस्तरुण्यः सवितुरुदय-काले भूषयन्त्याननानि ॥१८॥**

नखपदेति ॥ नखपदैर्नखक्षतैश्चिता व्याप्ता भागा येषां तांस्तथोक्तान् । स्तनाग्रान्कुचाग्रान् । वीक्षमाणा आलोकयन्त्यः । दन्तभिन्नं रदनखण्डितम् । अधरः किसलयमिव पल्लवमिवेति तस्याग्रम् । स्पृशन्त्यः स्पर्शं कुर्वत्यः । एतमभिमतो मनोऽभिलाषि यो रसस्तम् । नन्दयन्त्योऽभिनन्दयन्त्यः । तरुण्यो विलासवत्यः सवितुः सूर्यस्य । उदयकाले प्रभाते आननानि मुखानि । भूषयन्ति अलंकुर्वन्तीत्यर्थः ॥

**प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः प्रबलसुरतकेलिर्जातकन्दर्पदर्पः।**
**प्रियजनरहितानां चित्तसंतापहेतुः शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम् ॥१९॥**

प्रचुरेति ॥ प्रचुरो बहुलो गुडविकारः खण्डशर्करादिर्यस्मिंस्तथोक्तो जातः। स्वादवो ये शालयो धान्यानीक्षव इक्षुदण्डाश्च तै रम्यो रमणीयः। प्रबला अत्यधिकाः सुरतकेलयो यत्र तथाविधः । जातः संजातः कदर्पदर्पो मन्मथाधिक्यं यस्मिन्स तथोक्तः। प्रियजनेन कान्तजनेन रहितानाम् । विरहिणीनामित्यर्थः। चित्तसंतापस्य हेतुः कारणम् एष शिशिरसमयः शीतकालः । वो युष्माकम् श्रेयसे कल्याणाय। नित्यं सदा। अस्त्वित्यर्थः ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कविश्रीकालिदास-कविवराग्रणीकृतावृतुसंहारे महाकाव्ये शिशिरवर्णनं नाम पञ्चम सर्गः ।

---

1. C नखपदकृतभङ्गान्वीक्षमाणाः स्तनान्तान्, L नखपदरचिताग्रान्वीक्ष्यमाणाः स्तनान्तान्, नखपदकृतभङ्गान्, नखपदरचिताग्रान् 2. G °याग्रान् 3. G °भिन्नान् 4. C °रतवेशम्, °रतवेषम्, °रसमेताः, L °तरमोदम् 5. L वर्णयन्त्यः, दीपयन्त्यः, अन्धयन्त्यः 6. G °गुडविपाकः, °गुरुविपाकः 7. C प्रसृत,° प्रधृत° 8. G B शान्त° 9. L B °तम° 10. G B तेऽस्तु ।

## षष्ठः सर्गः

अथ क्रमप्राप्तं वसन्तकालं[1] वर्णयति—

प्रफुल्लचूताङ्कुरतीक्ष्णसायको[2] द्विरेफ[3]मालाविलसद्धनुर्गुणः ।
मनांसि वेद्धुं[4] सुरत[5]प्रसङ्गिनां वसन्तयोद्धा[6] समुपागतः प्रिये ॥१॥

प्रफुल्लेति ॥ हे प्रिये, प्रफुल्लस्य चूतस्याम्रवृक्षस्याङ्कुरा एव तीक्ष्णा निशिताः सायका बाणा यस्य स तथोक्तः । द्विरेफाणां भ्रमराणां माला पङ्क्तिरेव विलसन्धनुर्गुणो यस्य स तथोक्तः । वसन्तयोद्धा सुरतप्रसङ्गिनां मनांसि । वेद्धुं विदारयितुम् । समुपागत आगत इत्यर्थः । वंशस्थवृत्तमेतत् । लक्षणं तूक्तम् ॥

द्रुमाः सपुष्पाः सलिलं सपद्मं[7] स्त्रियः सकामाः[8] पवनः सुगन्धिः[9] ।
सुखाः प्रदोषा दिवसाश्च रम्याः सर्वं प्रिये चारुतरं वसन्ते ॥२॥

द्रुमा इति ॥ हे प्रिये, वसन्ते वसन्तकाले । सर्वं चारुतरमतिरमणीयमस्ति । सर्वं किं तदाह—द्रुमा इति । द्रुमा वृक्षाः । सपुष्पाः कुसुमसहिताः । सलिलं जलम् । सपद्मं कमलसहितम् । स्त्रियो वनिताः । सकामाः समन्मथाः । पवनो वायुः । सुगन्धिः कुसुमसंसर्गात्सुरभिः । प्रदोषाः संध्यासमयाः । सुखाः सुखकराः । दिवसाश्च रम्या रमणीया इति । उपजातिवृत्तमेतत । लक्षणं तूक्तम् ॥

वापीजलानां मणिमेखलानां शशाङ्कभासां प्रमदाजनानाम् ।
चूतद्रुमाणां कुसुमान्वितानां[10] ददाति[11] सौभाग्य[12]मयं वसन्तः ॥३॥

वापीति ॥ अयं वसन्तो वसन्तकालः । वापीजलानां दीर्घिकाजलानाम । तत्र जलक्रीडावशात् मणिमेखलानां मणिखचितमेखलानाम । स्त्रीभिः कटिप्रदेशे धारणात् । शशाङ्कभासां चन्द्रकान्तीनाम् । रात्रौ संसेव्यत्वात् । प्रमदाजनानां वनिताजनानाम् । सुप्रभोगाम् । कुसुमैः पुष्पैरन्विता युक्तास्तेषां तथोक्तानाम् । चूतद्रुमाणामाम्रवृक्षाणाम् । स्त्रीकर्णावतंसविषयपल्लवत्वात् । सौभाग्यं सुभगतां ददातीत्यर्थः ॥

कुसुम्भरागारुणितैर्दुकूलैर्नितम्बबिम्बानि विलासिनीनाम्[13] ।
रक्तांशुकैः[14] कुङ्कुमरागगौरै[15]रलंक्रियन्ते स्तनमण्डलानि ॥४॥

---

1. तुलनीयं रामायणीयमुपजीव्यत्वेन वसन्तवर्णनम् ४, १, १—२२ ; मालविकाग्निमित्रे ३, ४; ५; विक्रमोर्वश्याम् २, ६; ७; शाकुन्तले ६, ४ ; रघुवंशे ९, २४-४८; कुमारसम्भवे ३, २४-४३ ; मेघदूते ७१ ; बुद्धचरिते ४, ४४-५२ ; सौन्दरनन्दे ७, २-१२ ; १०, २०-३९ ; किरातार्जुनीये १०, ३१—३५ ; माघे ६, १—२१ ; सुभाषितावल्याम १६ ४२—१६९२ 2. L C °शायकः 3. द्विरेफमालां विदधन्धनुर्गुणाम्, °मालां विदधन धनुर्गुणम्, 4. L C B भेत्तुम् 5. G सुरतोत्सुकानाम् 6. L C योधः 7. G B सुपद्मम् 8. G B पवमाः 9. G B सुगन्धयः 10. L C B कुसुमानतानाम् 11. L तनोति 12. C C B सौरभ्यम् 13. G B नितम्बिनीनाम् 14. G तन्वंशुकैः 15. B पिञ्जरैः ।

कुसुम्भेति ॥ कुसुम्भस्य रागेणारुणितानि रक्तानि वैस्तथोक्तैः । दुकूलैर्वस्त्रैः । विलासिनीनां विलासवतीनां नितम्बबिम्बानि । कुङ्कुमस्य केसरस्य रागेण गौराः पिञ्जरास्तैस्तथोक्तैः । रक्तांशुकै रक्तवस्त्रैः । स्तनमण्डलानि कुचमण्डलानि । अलंक्रियन्त इत्यर्थः ।

कर्णेषु योग्यं नवकर्णिकारं [1]चलेषु नीलेष्वलकेष्व[2]शोकम् ।
[3]पुष्पं च फुल्लं [4]नवमल्लिकायाः [5]प्रयाति कान्तिं [6]प्रमदाजनानाम् ॥५॥

कर्णेष्विति ॥ प्रमदाजनानां वनिताजनानाम् । कर्णेषु श्रवणेषु । योग्यमवतंसयोग्यम । नवं नूतनं कर्णिकारं कर्णिकारकुसुमम् । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः' इत्यमरः । चलेषु चञ्चलेषु नीलेषु कृष्णवर्णेष्वलकेषु । अशोकं वञ्जुलकुसुमम् । 'वञ्जुलोऽशोके' इत्यमरः । फुल्लं संफुल्लं नवमल्लिकायाः पुष्पं च । जात्यभिप्रायेणैकवचनम् । कान्तिं शोभाम् । प्रयाति प्राप्नोतीत्यर्थः ॥

[7]स्तनेषु हाराः सितचन्दनार्द्रा भुजेषु [8]सङ्गं वलयाङ्गदानि ।
[9]प्रयान्त्यनङ्गातुरमानसानां [10]नितम्बिनीनां जघनेषु काञ्च्यः ॥ ६ ॥

स्तनेष्विति ॥ अनङ्गेन मन्मथेनातुरं पीडितं मानसं यासां तासां तथोक्तानाम् । नितम्बिनीनां नितम्बवतीनाम् । स्तनेषु कुचेषु । सितचन्दनेन धवलचन्दनद्रवेणार्द्राः । हारा मुक्ताहाराः । भुजेषु बाहुषु । वलयाङ्गदानि कटककेयूराणि । जघनेषु काञ्च्यः । सङ्गं संबन्धम् । प्रयान्ति प्राप्नुवन्तीत्यर्थः ॥

सपत्रलेखेषु विलासिनीनां [11]वक्त्रेषु हेमाम्बुरुहोपमेषु ।
[12]रत्नान्तरे मौक्तिक[13]सङ्गरम्यः स्वेदा[14]गमो विस्तरतामुपैति ॥ ७ ॥

सपत्रेति ॥ रत्नान्तरे रत्नानां मध्ये । मौक्तिकानां मुक्ताफलानां सङ्गेनैव रम्यः । स्वेदागमो घर्मनिर्गमः । विलासिनीनां विलासवतीनां स्त्रीणाम् । सपत्रलेखेषु पत्रलेखा कपोलादौ कस्तूर्यादिरचितावली तया सहितेषु । हेमाम्बुरुहेण काञ्चनपद्मेनोपमेषु । वक्त्रेषु मुखेषु । विस्तरतां विस्तारभावम् । उपैति प्राप्नोतीत्यर्थः ॥

[15]उच्छ्वासयन्त्यः श्लथबन्धनानि गात्राणि कन्दर्पसमाकुलानि ।
समीपवर्तिष्व[16]धुना प्रियेषु समुत्सुका एव भवन्ति नार्यः ॥ ८ ॥

उच्छ्वासयन्त्य इति ॥ श्लथानि शिथिलानि बन्धनानि कञ्चुकयादीनां

---

1. L केशेषु, B स्तनेषु हाराः 2. C C K अशोकः 3. B L शिखासु फुल्लाः, सुखासु पुष्पम् 4. L नवमल्लिकाश्च, B नवमालिकाश्च 5. B L प्रयान्ति शोभाम 6. L C B प्रमदाजनस्य, वनिताजनस्य 7. L मुखेषु 8. L मुखेषु कर्पूरसुगन्धिवाताः 9. L प्रयान्ति निःशङ्कमनङ्गसौख्यम्, निःसङ्गमनङ्गसौख्यम् 10. L विलासिनीनाम् - 11. G मुखेषु 12. G रत्यन्तरे 13. G °सङ्गरूपः, °सङ्गतुल्यः 14. स्वेदोद्गमो 15. L उल्लासयन्त्यः 16. अवि कार्मुकेषु

येषु तानि तथोक्तानि । कन्दर्पेणानङ्गेन समाकुलानि व्याकुलानि । 'कन्दर्पो दर्पकोऽनङ्गः' इत्यमरः । गात्राणि शरीराण्युच्छ्वासयन्त्यः । नार्यः स्त्रियः । अधुना वसन्तकाले । समीपवर्तिषु निकटस्थितेषु । प्रियेषु कान्तेषु । समुत्सुका उत्कण्ठिता एव । भवन्ति जायन्त इत्यर्थः ॥

**तनूनि[1] पाण्डूनि समन्थराणि[2] मुहुर्मुहुर्जृम्भणतत्पराणि ।**
**अङ्गान्यनङ्गः[3] प्रमदाजनस्य करोति[4] लावण्यससंभ्रमाणि ॥ ९ ॥**

तनूनीति ॥ अनङ्गः कामः । प्रमदाजनस्य स्त्रीजनस्य । अङ्गानि गात्राणि । तनूनि कृशानि । पाण्डूनि पाण्डुवर्णानि । समन्थराणि जडीभूतानि । मुहुर्मुहुर्वारंवारम् । जृम्भणतत्पराणि जृम्भणे प्रसितानि । 'तत्परे प्रसितासक्तौ' इत्यमरः । लावण्येन सौन्दर्येण ससंभ्रमाणि संवेगसहितानि । 'समौ संवेगसंभ्रमौ' इत्यमरः । करोतीत्यर्थः ॥

**नेत्रेषु लोलो[5] मदिरालसेषु[6] गण्डेषु पाण्डुः कठिनः[7] स्तनेषु ।**
**मध्येषु निम्नो[8] जघनेषु पीनः स्त्रीणामनङ्गो बहुधा[9] स्थितोऽद्य ॥ १० ॥**

नेत्रेष्विति ॥ स्त्रीणां युवतीनाम् । मदिरयालसान्यालस्ययुक्तानि येषु तथोक्तेषु । नेत्रेषु लोचनेषु । 'लोचनं नयनं नेत्रम्' इत्यमरः । लोलश्चञ्चलः । गण्डेषु पाण्डुः पाण्डुवर्णः । स्तनेषु कुचेषु कठिनः । मध्येषु मध्यभागेषु निम्नो गभीरः । जघनेषु पीनः पुष्टः । इत्येन प्रकारेणानङ्गः कामोऽद्य बहुधा बहुप्रकारेण । स्थितः । उपस्थित इत्यर्थः ॥

**अङ्गानि निद्रालसविभ्रमाणि[10] वाक्यानि किंचिन्मदलालसानि[11] ।**
**भ्रूक्षेपजिह्मानि च वीक्षितानि चकार[12] कामः प्रमदाजनानाम्[13] ॥ ११ ॥**

अङ्गानीति ॥ कामः प्रमदाजाननानां कामिनीनाम् अङ्गानि शरीराणि । निद्रयालसा विभ्रमाः शृङ्गारवेषा येषु तानि तथोक्तानि । वाक्यानि किंचिदीषन्मदेन लालसानि चाटूनि । वीक्षितानि प्रेक्षणानि । भ्रूक्षेपेण जिह्मानि कुटिलानि च । चकार । कृतवानित्यर्थः ॥

**प्रियङ्गुकालीयककुङ्कुमाक्तं[14] स्तनेषु[15] गौरेषु विलासिनीभिः ।**
**आलिप्यते[16] चन्दनमङ्गनाभिर्मदालसाभिर्मृगनाभियुक्तम् ॥ १२ ॥**

---

1. G घनानि 2. L सुकम्पितानि, C मदालसानि 3. G अमान्यः 4. G °त्यसौ प्रोषितभर्तृकस्य 5. C B लोलम्, K अलोलः 6. G मदिरारसेषु 7. G कठिनस्तनेषु 8. L K नम्रः 9. G बहुशः 10. K °विह्वलानि 11. B G °मदिरालसानि, °मदसालसानि 12. करोति । मुद्रितपाठः शोधापेक्षः । 13. G प्रमदोत्तमानाम्, प्रमदाजनस्य 14. L C °मानि 15. L स्तनाङ्ग रागेषु विचर्चितानि, K विसर्जितानि 16. L आसेव्यते, आलिख्यते ।

प्रियङ्ग्वति ॥ विलासिनीभिर्विलासवतीभिः । मदेनालसा आलस्ययुक्तास्ताभिस्तथोक्ताभिः । अङ्गनाभिः स्त्रीभिः । गौरेषु गौरवर्णेषु । स्तनेषु कुचेषु । प्रियङ्गुः श्यामा लता, कालीयकं जायकम्, कुङ्कुमं केसरं च तैराक्तं युक्तम् मृगनाभियुक्तं कस्तूरीयुक्तम् । चन्दनमालिप्यते । लाप्यत इत्यर्थः ॥

गुरूणि वासांसि विहाय तूर्णं[1] तनूनि लाक्षारसरञ्जितानि ।
[2]सुगन्धिकालागुरुधूपितानि धत्ते जनः [3]काममदालसाङ्गः ॥ १३ ॥

गुरूणीति ॥ काममदेनालसमङ्गं यस्य स तथोक्तो जनः । गुरूणि वासांसि वस्त्राणि । तूर्णं सत्वरम् । विहाय त्यक्त्वा । तनूनि सूक्ष्माणि । लाक्षारसेन । रञ्जितान्यारक्तानि सुगन्धिना सुरभिणा कालागुरुणा कृष्णागुरुणा । धूपितानि संजातधूपानि वासांसि धत्ते दधातीत्यर्थः ॥

पुंस्कोकिलश्[4]चूतरसासवेन [5]मत्तः प्रियां चुम्बति रागहृष्टः ।
[6]कूजद्द्विरेफोऽप्ययमम्बुजस्थः प्रियं प्रियायाः प्रकरोति [7]चाटु ॥ १४ ॥

पुंस्कोकिलेति ॥ रागेण हृष्टो हर्षितचूतस्याम्रवृक्षस्य रस एवासवस्तेन । मत्तः प्रमत्तः । पुंस्कोकिलः प्रियां चुम्बति । अम्बुजे कमले तिष्ठति स तथोक्तः । कूजन्गुञ्जन्नयं द्विरेफो भ्रमरोऽपि । प्रियाया भ्रमर्याः । प्रियमिष्टं चाटु प्रकरोतीत्यर्थः ॥

[8]ताम्रप्रवालस्तबकावनम्राश्चूतद्रुमाः पुष्पितचारुशाखाः ।
कुर्वन्ति [9]कामं [10]पवनावधूताः [11]पर्युत्सुकं मानसमङ्गनानाम् ॥१५॥

ताम्रेति ॥ ताम्राणामारक्तानां प्रवालानां पल्लवानां स्तबकैर्गुच्छैरवनम्रा नताः । पुष्पिताः संजातपुष्पा अत एव चारवः सुन्दराः शाखा येषां ते तथोक्ताः । पवनेन वायुनावधूताः कम्पिताः । चूतद्रुमा आम्रवृक्षाः । अङ्गनानां । वनितानाम् । मानसमन्तकरणम् । काममत्यन्तम् । पर्युत्सुकमुत्कण्ठितं कुर्वन्तीत्यर्थः ॥

आ मूलतो विद्रुमराग[12]ताम्रं [13]सपल्लवाः पुष्पचयं दधानाः ।
कुर्वन्त्यशोका हृदयं सशोकं निरीक्ष्यमाणा नवयौवनानाम् ॥१६॥

आ मूलेति ॥ आ मूलतो मूलादारभ्य । विद्रुमस्य प्रवालस्य रागवत्ताम्रमारक्तम् । पुष्पचयं कुसुमसमूहम् । दधाना धारयन्तः । सपल्लवाः पत्रसहिताः । अशोका

---

1. G सांप्रतम् 2. G शिरांसि, नितान्त 3. L G कामशरानुविद्धः 4. G K °रसेन मत्तः 5. L K प्रियामुखं चुम्बति सादरोऽयम् 6. L B गुञ्जत्, 7. K चाटुम् 8. L प्रवालताम्र,° प्रवालताम्रस्तबकावतंसाः 9. G कान्ते, सान्द्राः 10. G पवनाभिभूताः 11. L समुत्सुकत्वं मनसः K समुत्सुकत्वम्, पर्युत्सुकत्वं मनसः, 12. L K °ताम्राः 13. L K सपल्लवम्

वञ्जुलद्रुमाः । निरीक्ष्यमाणा अवलोक्यमानाः सन्तः । नवयौवनानां विप्रयुक्तानां तरुणीनां च । हृदयं सशोकं कुर्वन्तीत्यर्थः ॥

**मत्तद्विरेफपरिचुम्बितचारुपुष्पा मन्दानिलाकुलितनम्र[1]मृदुप्रवालाः ।**
**कुर्वन्ति कामिमनसां[2] सहसोत्सुकत्वं चूता[3]भिरामकलिकाः समवेक्ष्यमाणाः ॥१७॥**

मत्तेति ॥ मत्तैरुन्मत्तैर्द्विरेफैर्भ्रमरैः परिचुम्बितानि चारूणि सुन्दराणि पुष्पाणि यासां तास्तथोक्ताः । मन्दैरनतिप्रबलैरनिलैः पवनैराकुलिता आन्दोलिता नम्रा नम्रीभूता मृदवः कोमलाश्च प्रवाला नवकिसलया यासां तास्तथोक्ताः । चूतस्याम्रस्या-भिरामाः सुन्दराः । कलिकाः । समवेक्ष्यमाणा अवलोक्यमानाः सत्यः । कामिमनसाम् । सहसाकस्मात् । उत्सुकत्वमौत्सुक्यं कुर्वन्तीत्यर्थः ॥ वसन्ततिलकावृत्तमेतत् । लक्षणं तूक्तम् ॥

**कान्ता[4]मुखद्युतिजुषामपि[5] चोद्गतानां शोभां परां कुरवकद्रुममञ्जरीणाम् ।**
**दृष्ट्वा[6] प्रिये[7] सहृदयस्य भवेन्न कस्य कन्दर्पबाणपतनव्यथितं[9] हि चेतः ॥१८॥**

कान्तेति ॥ हे प्रिये, कान्तामुखस्य रमणीवदनस्य द्युतिं कान्तिं जुषन्ते सेवन्त इति तेषां तथोक्तानाम् । अपि च किंच । उद्गतानां निर्गतानाम् । कुरवकद्रुमा अम्लानवृक्षास्तेषां मञ्जरीणाम् । 'अम्लानस्तु महासहा । तत्र शोणे कुरवकः' इत्यमरः । परामुत्कृष्टां शोभाम् । दृष्ट्वावलोक्य । कस्य सहृदयस्य । चेतोऽन्तःकरणम् । कन्दर्पस्य कामस्य बाणानां शराणां पतनेन निपातेन व्यथितं न भवेत् । अपि तु सर्वस्यापीत्यर्थः । हिः पादपूरणार्थः ॥

**आदीप्तवह्निसदृशैर्मरुता[8]वधूतैः[10] सर्वत्र किंशुकवनैः कुसुमावनम्रैः[11] ।**
**सद्यो वसन्त[12]समये हि[13] समाचितेयं रक्तांशुका[14] नववधूरिव भाति भूमिः[15] ॥१९॥**

आदीप्तेति ॥ वसन्तसमये वसन्तकाले । सर्वत्रेतस्ततः । सद्यः सत्वरम् । आदीप्ते-नाभिमुख्येन प्रज्वलितेन वह्निना सदृशास्तैस्तथोक्तैः आरक्तैरित्यर्थः । मरुता पवनेनावधूताः कम्पितास्तैस्तथोक्तैः । कुसुमैः पुष्पैरवनम्रा नतास्तैस्तथोक्तैः । किंशुकवनैः पलाशवृक्षस-मुदायैः । 'पलाशे किंशुकः पर्णो वातपोतः' इत्यमरः । समाचिता इयं भूमिः पृथिवी । रक्तांशुका रक्तवसना । नववधूरिव नूतनस्त्रीव । भाति शोभत इत्यर्थः । हि निश्चितम् ॥

1. L K °चारु° 2. G मनसश्च समुत्सुकं 3. C B चूताविमुक्तकलिकाः L बालातिमुक्तलतिकाः 4. L कान्तामुखद्युतिमुषाम्, कान्तामुखं, द्युतिमनोहर मुद्गतानाम् कान्तामुखद्युतिनिभाम्, 5. C अपि चोद्गतानाम् 6. L कान्तामुखद्युतिनिभाम् 7. L दृष्ट्वा प्रियतमारहितस्य पुंसः, हि पथिकस्य 8. L G. निकरैः, पवनः 9. G व्यथनम् 10. L रपि पारिजातैः 11. G कीर्णैः 12. G वसन्त ऋतुनाधिगता चितान्तम् 13. L समुपागते च C समुपागते हि, न समागतेयम् 14. G रक्तांशुकैः 15. सुभाषितावल्यामुद्धृतं पद्यम्

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं किं कर्णिकारकुसुमैर्न कृतं नु दग्धम्[1] ।
यत्कोकिलैः[3] पुनरयं[4] मधुरैर्वचोभिर्यूनां मनः सुवदनानिहितं[5] निहन्ति ॥२०॥

किं किंशुकैरिति ॥ सुवदनायां रमणीयमुखायां निहितं स्थापितम् । यूनां तरुणानाम् । मनोऽन्तःकरणम् । शुकस्य कीरस्य मुखस्य वदनस्य छविरिव छविः कान्तिर्येषां तैस्तथोक्तैः । किंशुकैः पलाशकुसुमैः । किं न भिन्नं न विदारितम् । कर्णिकारस्यद्रुमोत्पलस्य कुसुमैः पुष्पैश्च । नु निश्चयम् । किं दग्धं न कृतम् । यत्पुनरयं कोकिलो मधुरैर्वचोभिर्वचनैः । निहन्तीत्यर्थः ॥

पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः[6] कूजद्भिरुन्मदकलानि[7] वचांसि[8] भृङ्गैः ।
लज्जान्वितं सविनयं हृदयं क्षणेन पर्याकुलं[9] कुलगृहेऽपि कृतं वधूनाम् ॥२१॥

पुंस्कोकिलैरिति ॥ कलमव्यक्तमधुरं वचो वचनं येषां तैस्तथोक्तैः । उपात्तः संप्राप्तो हर्षो येषां तैस्तथोक्तैः । पुंस्कोकिलैः । उन्मदेनोत्कटमदेन कलान्यव्यक्तमधुराणि । वचांसि वचनानि । कूजद्भिर्भृङ्गैर्भ्रमरैः । लज्जया त्रपयान्वितं युक्तम् । सविनयं विनयसहितम् । वधूनां स्त्रीणां हृदयम् । कुलगृहेऽपि क्षणेन क्षणमात्रेण । पर्याकुलं व्याकुलं कृतमित्यर्थः ॥

आकम्पयन्कुसुमितां[10] सहकारशाखा विस्तारयन्परभृतस्य[11] वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन्नराणां[12] नीहारपातविगमात्सुभगो[13] वसन्ते[14] ॥२२॥

आकम्पयन्निति ॥ वसन्ते वसन्तकाले । नीहारस्य हिमस्य यः पातः पतनं तस्य विगमान्नाशात् । सुभगः सुन्दरः । वायुः पवनः । कुसुमिताः संजातकुसुमाः । सहकारस्यातिसौरभस्याम्रवृक्षस्य शाखाः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । आकम्पयन्सन् । दिक्षु परभृतस्य कोकिलस्य । वनप्रियः परभृतः कोकिलः पिकः' इत्यमरः । वचांसि वचनानि । विस्तारयन् । नराणां पुंसां हृदयानि । हरन्नपहरन् । विवाति विशेषेण वहतीत्यर्थः ॥

कुन्दैः सविभ्रमवधूहसितावदातैरुद्योतितान्युपवनानि[15] मनोहराणि ।
चित्तं मुनेरपि हरन्ति निवृत्तरागं[16] प्रागेव[17] रागमलिनानि[18] मनांसि यूनाम्[19] ॥२३॥

कुन्दैरिति ॥ सविभ्रमाणि विभ्रमसहितानि यानि वधूहसितानि रमणीहास्यानि तानीवावदातानि धवलानि तैस्तथोक्तैः । 'अवदातः सितो गौरोऽवलक्षो

---

1. L K न दधम् च दग्धम् 2. L कृतं मनोज्ञम् 3. L काकिला: 4. L पुनरमी, पुरुरवै: 5. L B सुवदने नियत हरन्ति ०दहन्ति 6. K B फलरसै: समुपात्तहर्षै: 7. L उन्मदकराणि वचारि पुंसाम् 8. G विलोचनानिं, वचांसि धीरम् 9. G पर्याकुले 10. L मिताम् 11. G परभृतोऽय 12. K B वधूनाम् 13. G B विमल: 14. G वनेषु 15. G संशोभितानि 16. G निरस्तरागम् 17. L प्रायेण K प्रायेण रागचलितानि 18. G मखिलानि 19. LK पुंसाम्

धवलोऽर्जुनः' इत्यमरः । कुन्दैः कुन्दकुसुमैः । उद्योतितानि दीप्तानि । शोभितानीति यावत् । मनोहराण्युपवनान्यारामाः । निवृत्तोऽनुरागो यस्मात्तत्तथोक्तम् । मुनेरपि चित्तम् । हरन्त्यपहरन्ति । प्रागेव मुनिचित्तापहरणात्प्रागेव रागेण मलिनानि यूनां मनांसि हरन्तीत्यर्थः ॥

**आलम्बिहेमरसनाः स्तनसक्तहाराः कन्दर्पदर्पशिथिलीकृतगात्रयष्ट्यः ।**
**मासे मधौ मधुरकोकिलभृङ्गनादैर्नार्यो हरन्ति हृदयं प्रसभं नराणाम् ॥२४॥**

आलम्बीति ॥ आलम्बिन्यो लम्बमाना हेमरसनाः सुवर्णमेखला यासां तास्तथोक्ताः । स्तनेषु कुचेषु सक्ताः संसक्ता हारा यासां तास्तथोक्ताः । कन्दर्पस्य मन्मथस्य दर्पेणाधिक्येन शिथिलीकृता गात्रयष्टयः शरीरलता यासां तास्तथोक्ताः । नार्यः स्त्रियः । मधौ मासे वसन्ते । नराणां हृदयम् । मधुरैः कोकिलाश्च भृङ्गाश्च तेषां नादैर्विरुतैः सह । प्रसभमत्यन्तं हरन्तीत्यर्थः ॥

**नानामनोज्ञकुसुमद्रुमभूषितान्तान्हृष्टान्यपुष्टनिनदाकुलसानुदेशान् ।**
**शैलेयजालपरिणद्धशिलातलौघान्दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः ॥२५॥**

नानेति ॥ सर्वो जनो लोकः । नाना नानाजातीया मनोज्ञाः सुन्दरा ये कुसुमद्रुमाः पुष्पवृक्षास्तैर्भूषिताः शोभिता अन्ताः प्रान्तभागा येषां तांस्तथोक्तान् । हृष्टा हर्षिता येऽन्यपुष्टाः कोकिलास्तेषां निनदैः शब्दैराकुला व्याकुलाः सानुदेशाः प्रस्थप्रदेशा येषां तांस्तथोक्तान् । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । शैलेयजालेन परिणद्धा व्याप्ताः शिलातलानामोघाः समुदाया येषां तांस्तथोक्तान् । क्षितिभृतः पर्वतान् । दृष्ट्वा मुदं हर्षमेति प्राप्नोतीत्यर्थः ॥

**नेत्रे निमीलयति रोदिति याति शोकं घ्राणं करेण विरुणद्धि विरौति चोच्चैः ।**
**कान्तावियोगपरिखेदितचित्तवृत्तिर्दृष्ट्वाध्वगः कुसुमितान्सहकारवृक्षान् ॥२६॥**

नेत्रे इति ॥ कान्ताया वियोगेन विरहेण परिखेदिता खिन्ना चित्तवृत्तिर्यस्य स तथोक्तः । अध्वगः पथिकः । कुसुमितान्मञ्जरीयुतान् । सहकारवृक्षानाम्रवृक्षान् । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । दृष्ट्वावलोक्य । नेत्रे लोचने ।

---

1. B G प्रालम्भि, आलम्ब्य चन्दनासान्, आलब्धचन्दनरसाः 2. G लग्न 3. G कोमल 4. G B रावैः 5. रामाः 6. G °कुसुमोद्गमपुष्पितान्तान् 7. K °भूषिताग्रान्, L °पुष्पिताग्रान् °भूषिताङ्गान् 8. °कुलशोभितसानुदेशान् 9. G °संधिदेशान् 10. G °जानु° 11. L °तलान्तान्, °तलांश्च, K °गुहान्तान्, °गृहान्तान् 12. G अध्वगः 13. G मदमेति, समुपैति सर्वान् 14. अपपाठः तु. G निमीलति विरोदिति 15. C B याति मोहम्, जातमोहान् 16. G B प्राणान् 17. G °देवित° 18. L जनः, नरः, नगे 19. G कुसुमिताः सहकारशाखाः, कुसुमितान् सहसैव चूतान् ।

निमीलयति पिधत्ते । तद्दर्शनस्य संतापाधिक्यजनकत्वात् । रोदिति क्रन्दति । शोकं याति । तत्समये प्रेयसीप्राप्त्यभावात् । घ्राणं करेण हस्तेन विरुणद्धि । तदीयसौगन्ध्यस्यापि संतापाधिक्यजनकत्वात् । उच्चैरुच्चस्वरेण विरौति । हा कान्ते इति शब्दं करोतीत्यर्थः ॥

**समदमधुभराणां[1] कोकिलानां च नादैः कुसुमितसहकारैः कर्णिकारैश्च रम्यः[2] ।**
**इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां[3] तुदति कुसुममासो[4] मन्मथोद्वेजनाय[5] ॥२७॥**

समदेति ॥ रम्यः सुन्दरः । कुसुममासो वसन्तसमयः । समदा मदसहिता ये मधुकरा भ्रमरास्तेषां कोकिलानां च नादैः । कुसुमिताः संजातकुसुमाः सहकारा आम्रवृक्षास्तैः । कर्णिकारैः । द्रुमोत्पलैः । सुतीक्ष्णैरतिनिशितैः । इषुभिर्बाणैरिव । मन्मथोद्वेजनायोद्वेजयन् । मानिनीनां मानवतीनाम् । मानसं तुदति व्यथयतीत्यर्थः । मालिनीवृत्तमेतत् । लक्षणं तूक्तम् ॥

**आम्रीमञ्जुलमञ्जरीवरशरः सत्किंशुकं यद्धनु-**
**र्ज्या यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम् ।**
**मत्तेभो मलयानिलः परभृतो यद्वन्दिनो लोकजित्**
**सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः ॥ २८ ॥**

आम्रीति ॥ यस्याम्री आम्रसंबन्धिनी मञ्जुला सुन्दरा मञ्जरी वरशरा उत्कृष्टा बाणाः । सदुत्तमं किंशुकं पलाशकुसुमं धनुः । यस्यालिकुलं भ्रमरसमूहो ज्या गुणः । यस्य कलङ्करहितं सितं श्वेतं छत्रं सितांशुश्चन्द्रः । यस्य मत्तेभो मत्तगजो मलयानिलो मलयसंबन्धी पवनः । यस्य वन्दिनो वैतालिकाः परभृतः कोकिलाः । लोकजिद्वसन्तेनान्वितो युक्तः सोऽयं वितनुरनङ्गः । वो युष्मभ्यम् । भद्रं कल्याणम् । वितरीतरीतु ददात्वित्यर्थः । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं तु वृत्तरत्नाकरे—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति ॥

पूजितो न जगदीश्वरो मया,नापि विश्वजननी सुसेविता ।
किंतु यत्प्रलपितं निजेच्छया,तत्र सद्गुरुकृपैव कारणम् ॥
वेदचन्द्रवसुभूमि-( १८१४)-वत्सरे,माघसूर्यसितपञ्चमीतिथौ ।
व्योमपुष्करनगै-(७००)-मिता कृतिः,पूरिता हि मणिरामशर्मणा ॥

इति भारद्वाजगोत्रोत्पन्नमणिरामविरचितया चन्द्रिकाख्यया व्याख्यया समेतः कविश्रीकालिदासकविवराग्रणीकृतावृतुसंहारे महाकाव्ये वसन्तवर्णनं नाम षष्ठः सर्गः ॥

——:०:——

1. G मधुभराणाम् 2. L C रम्यैः 3. L कामिनीनाम् 4. G कुसुमचापः, G कुसुमबाणः 5. C B °थोद्दीपनाय, थोत्तेजनाभिः

# अथ प्रक्षेपाः

प्रावृड्-वर्णने—वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्रयन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गमाः ॥१॥

शरद्-वर्णने—करकमलमनोज्ञाः कान्तसंसक्तहस्ता वदनविजितचन्द्राः काश्चिदन्यास्तरुण्यः ।
चितकुसुमसुगन्धि प्रायशो यान्ति वेश्म प्रबलमदनहेतोस्त्यक्तसंगीतरागाः ॥२॥
सुरतरसविलासाः सत्सखीभिः समेता असमरसविनोदं सूचयन्ति प्रकामम् ।
अनुपममुखरागा रात्रिमध्याविनोदं शरदि तरुणकान्ताः सूचयन्ति प्रमोदान् ॥३॥

हेमन्त-वर्णने—मार्गं निरीक्ष्यातिनिरस्तनीरं प्रवासखिन्नं पतिमुद्वहन्त्यः ।
प्रवेक्ष्यमाणां हरिणेक्षणाक्ष्यः प्रबोधयन्तीव मनोरथानि ॥४॥

वसन्त-वर्णने—ईषत्तुषारैः कृतशीतहर्म्यैः सुवासितं चारु शिरः सचम्पकैः ।
कुर्वन्ति नार्योऽपि वसन्तकाले स्तनं सहारं कुसुमैर्मनोहरैः ॥५॥
रुचिरकनककान्तीन्मुञ्चतः पुष्पराशीन् मृदुपवनविधूतान्पुष्पितांश्चूतवृक्षान् ।
अभिमुखमभिवीक्ष्य क्षामदेहोऽपि मार्गे मदनशरनिघातैर्मोहमेति प्रवासी ॥६॥
परभृतकलगीतैर्ह्लादिभिः सद्वचांसि स्मितदशनमयूखान् कुन्दपुष्पप्रभाभिः ।
करकिसलयकान्तिं पल्लवैर्विद्रुमाभैरुपहसति वसन्तः कामिनीनामिदानीम् ॥७॥
कनककमलकान्तैराननैः पाण्डुगण्डैरुपरिनिहितहारैश्चन्दनार्द्रैः स्तनाग्रैः ।
मदजनितविलासैः सालसैर्दृष्टिपातैर्मुनिवरमपि नार्यः कामयन्ते वसन्ते ॥८॥
मधुसुरभिमुखाब्जं लोचने लोलतारे नवकुरुवकपूर्णः केशपाशो मनोज्ञः ।
अतिगुरु कुचयुग्मं श्रोणिबिम्बं तथैव न भवति किमिदानीं योषितां ब्रूहि चारु ॥९॥
आकम्पितानि हृदयानि मनस्विनीनां वातैः प्रफुल्लसहकारकृताधिवासैः ।
उत्कूजितैः परभृतस्य मदाकुलस्य श्रोत्रप्रियैर्मधुकरस्य च गीतनादैः ॥१०॥
रम्यः प्रदोषसमयः स्फुटचन्द्रभासः पुंस्कोकिलस्य विरुतं पवनः सुगन्धिः ।
मत्तालियूथविरुतं निशि सीधुपानं सर्वं रसायनमिदं कुसुमायुधस्य ॥११॥
छायां जनः समभिवाञ्छति पादपानां नक्तं तथेच्छति पुनः किरणं सुधांशोः ।
हर्म्यं प्रयाति शयितुं सुखशीतलं च कान्तां च गाढमुपगूहति शीतलत्वात् ॥१२॥
नीलाशोकविकल्पिताधरमधुर्मत्तद्विरेफस्वनः
कुन्दापीडविशुद्धदन्तनिकरः प्रोत्फुल्लपद्मानननः ।
चूतामोदसुगन्धिमन्दपवनः शृङ्गारदीक्षागुरुः
कल्पान्तं मदनप्रियो दिशतु वः पुष्पागमो मङ्गलम् ॥१३॥
[1] मलयपवनविद्धः कोकिलालापनाभिरम्यः,सुरभिमधुनिषेकाल्लब्धगन्धप्रबन्धः ।
विविधमधुपयूथैर्वीक्ष्यमाणः समन्ताद्,भवतु तव वसन्तः काल एषोऽभिभूत्यै ॥१४॥

---

1 रामा० ४, २८ २७

# पादानुक्रमणिका

# पदानुक्रमणिका

# ओषधिवनस्पत्यादिपदानुक्रमणिका

---

* √ धातुसंकेतः,–प्रातिपदिकसंकेतः, अव्ययमसंकेतितमिति पदानुक्रमणिकायां सर्वत्र बोध्यम्

# शुद्धिपत्रम्

महायुद्धं निमित्तीकृत्य प्रतिदिनं मिथः अक्षरयोजकमुद्रणालयाध्यक्षाणां पारिश्रमिकसंघर्षजानि अपमुद्रणानि सतामन्तःकरणक्षोभाय यथा मा भूवन्निति नितान्तमपेक्षितं शुद्धिपत्रमिहोपन्यस्यते ।

| पृष्ठ० | पङ्क्ति० | अशुद्ध० | शोध्य० |
|---|---|---|---|
| ६ | २,८ | तेषाम्, एषाम् | येषाम् |
| ७ | १३ | वमधुः | वमथुः |
| ८ | ३१ | ०नितान्यन्यशे० | ०टितान्यशे० |
| ९ | टिप्पण | ६,७ | ७,६ |
| ११ | टिप्पण | १,२,४-१० | ८,५,६-१२ |
| १३ | १५ | निश्चितम् | चितम् |
| १६ | १६-१७ | अङ्क १-५ | ४-८ |
| ३१ | २५ | वधूटिव | वधूरिव |
| ५० | २१ | परिमुक्तं | परिभुक्त |
| ५३ | ४ | समामाः | सकामाः |
| ५४ | १९ | विस्तरतामामु० | विस्तरतामु० |
| ५५ | १३ | स्थिोऽद्य | स्थिनोऽद्य |
| ,, | २१ | जाननाना | जनाना |
| ६२ | २९ | ०लापनाभिरम्यः | ०लापरम्य. |
| ६३ | ८ | ०काशु | ०नाशु |
| ,, | १०,११ | पणि० | परि० |
| ,, | १२ | अवगत | अपगत० |
| ,, | १३ | केत० | चेत० |
| ६८ | २३ | प्रयापित ० | प्रयाचित० |
| ,, | ५३ | बालातेषु | बालातपेषु |
| ६९ | १० | यद्विन्दिनः | यद्वन्दिनः |
| ७१ | ७,१२ | मालितिभिः | मालतीभिः |
| ७२ | २३ | सुखास० | सुखस० |
| ७३ | ३ | ०लोप्त० | ०लोत्प० |
| ७४ | | अति | अतिमनोज्ञ |